ॐ

महाचार्या शेः सुरेष्शर्मा विरचित विनायक संहिता

## अथ विनायक संहिता विषयशूचीः ॥

ॐ विराट् विश्वकर्म परब्रह्मणे नमः ॥

## ॥ विनायक संहिता ॥

### अथ विश्वकर्मा स्तुति पटलं ॥

**नारद ऋषि उवाच ॥**

येनेदं सप्त लोकां तं त्र्यैलोक्यं सचराचरं ।

तस्मै ईशाय नित्याय नमः श्री विश्वकर्मणे ॥ १ ॥

अव्यक्तं व्यक्तता नित्यं येन विश्वंचराचरं ।

तस्मै ईशाय नित्याय नमः श्री विश्वकर्मणे ॥ २ ॥

**कालहस्ति ऋषि उवाच ॥**

पञ्चवक्त्रस्त्रिनेत्रोसौ जटाजूट विराजितः ।

रक्तगौररुचिश्शान्तो विभुर्भासित चर्चितः ॥ ३ ॥

लेखनीं पुस्तकं पाशं मसि सूत्राभयं धनुः ।

कुठारं अङ्कुशं बाणां बिभ्राणो दशर्भुजैः ॥ ४ ॥

सहस्रादित्य सङ्काशो दिव्याभरणभूषितः ।

दिव्याम्बरधरो देवो योगमाया समावृतः ॥ ५ ॥

भूत्वाथ पुरुषाकारो विश्वकर्मादि पूरुषः ।

प्रतीकेष्व सृजद्देवान् विश्वोत्पत्ति चिकीर्षया ॥ ६ ॥

मुखेभ्यो ब्रह्मणः पञ्चजाता मन्वादयः क्रमात्।

मनुर्मयश्च त्वष्टा च शिल्पी विश्वज्ञ एव च॥ ७॥

स्वयंभुवब्रह्म समारम्भां विश्वकर्मा महाचार्य मध्यमां।

अस्मदाचार्य पर्यन्तां वन्दे जगत्गुरु परंपरां॥ ८॥

**याज्ञवल्क्य वाजसनेयिन ऋषय उवाच।**

श्री दक्षिणामूर्त्तिंश्च विश्वकर्मा इति श्रुतिः।

अथ दक्षिणतः। अयं दक्षिणा विश्वकर्मा इति।

अयं वै वायुर्विश्वकर्मा योऽयं पवते।

एष हीदं सर्वं करोति। तद्यत्तमाह दक्षिणेति।

तस्मादेष दक्षिणैव भूयिष्ठं वाति।

मनो ह वायु र्भूत्वा दक्षिणतस्तस्यौ तदेव तद् रूपमुपदधाति॥ ९॥

**विश्वकर्मा भौवन ऋषि उवाच॥**

य इमा विश्वा भुवनानि। १।

चक्षुषः पिता मनसा हि धीरो। २।

यज्ञपतिमृषय एनसाऽऽहुः प्रजा। ३।

स प्रजानन् प्रतिगृभ्णीत विद्वान्। ४।

यदाकूतात्समसुस्रोद्धृदो वा मनसा। ५।

इति यजुर्वेदीय वैश्वकर्मण पंच सूक्तानि जुहोति

पठन्ति वा सर्वपाप विनाशनम्॥ १० ॥

## अथ स्थापत्यवेद विधि पटलं ॥

**विखनस ऋषि उवाच ॥**

वास्तुवेदोश्च धनुर्वेदो गन्धर्ववेदश्च तथा मुने ।

आयुर्वेदश्च इतिहासपुराणौ च पञ्चैतोपवेदाः प्रकीर्तितं ॥ १ ॥

**पराशर ऋषि उवाच ॥**

ऋग्वेदं शिल्पशास्त्रं च यजुर्वेदं चिकित्सकं ।

सामवेदं ज्योतिषं च धनुस्शास्त्रं अथवर्णः ॥ २ ॥

**नारद ऋषि उवाच ॥**

वास्तुवेदं यथा ब्रह्मा वास्तुवेदं यथा हरिः ।

वास्तुवेदं यथा रुद्रो वास्तुवेदो च देवता ॥ ३ ॥

न वास्तु वर्जितलोके वस्तव्यं मूर्तिमिच्छता ।

चक्षुर्भूत्तो हि वास्तुज्ञस्तत्र धर्मः सनातनः ॥ ४ ॥

वास्तुवेदसमं ज्ञानं वास्तुवेद समक्रियं ।

वास्तुवेदसमं शास्त्रं वास्तुशास्त्रश्च मानयेत्॥ ५ ॥

वास्तुज्ञानं स्वतः सिद्धं सृष्टि काम पुराकृतं ।

तेनैव वास्तुशास्त्रेण लोको भवति पूजितः ॥ ६ ॥

नकोपी कस्य चित्कर्ता कल्पे कल्पान्तरान्तरे ।

वेदवश्च सयुद्धर्ता विश्वकर्मा युगे युगे ॥ ७ ॥

ऋषिभिः वास्तुवेदंश्च मनुवादिभिः प्रकाशितं ।

सृष्टयादौ ब्रह्मणा सार्द्धमाकाशात् कथितं पुरा ॥ ८ ॥

ब्रह्मणस्तु मुनयः सर्वे प्राप्ता वै विश्वकर्मणः ।

पुनश्च तपसां कृत्वा आत्मज्ञा ऋषि सत्तमाः ॥ ९ ॥

**मानासार ऋषि उवाच ।**

विश्वकर्मा च विश्वेच विश्वसारं प्रबोधकः ।

वृतश्चैव मयश्चैव त्वष्टा चैव मनुर्नलः ॥ १० ॥

मानविं मानकल्पश्च मानसारो बहुश्रुतः ।

प्रष्टा च मानबोधश्च विश्वबोधो नायश्च तथा ॥ ११ ॥

आदिसारो विशालश्च विश्वकाश्यप एव च ।

वास्तुबोधो महातन्त्रो वास्तुविद्यापतिस्तथा ॥ १२ ॥

पाराशरीयकश्चैव कालयूपो महाऋषिः ।

चैत्याख्यः चित्रकः आवर्यः साधकसार संहितः ॥ १३ ॥

भानुश्च इन्दूश्च लोकज्ञः सौराख्यः शिल्पिवित्तमः ।

तदेव ऋषयः प्रोक्ता द्वात्रिंशतिः संख्यया ॥ १४ ॥

**शिल्पकाश्यप प्रजापति अथर्वणौ उवाच ॥**

ॐ शिल्पा॑नि शंसन्ति ॥ १५ ॥

देवशिल्पा॑नि ए॒तेषां वै शिल्पा॑नां

अनु॑कृती॒ह शि॒ल्पं॑ अ॒धि॑गं॒यते ॥ १६ ॥

हस्ती कंसो वासो हिरण्यं अश्वतरीरथः शिल्पं ॥ १७ ॥

शिल्पं हास्मिन् अधिगंयते य एवं वेद ॥ ११ ॥

यदेव शिल्पानि शंसति । तत् स्वर्गस्य लोकस्य रूपं ॥ १८ ॥

यद् देव शिल्पानि । आत्मसंस्कृति वैं शिल्पानि ।

आत्मानमेवास्य तत् संस्कुर्वीन्ति ॥ १९ ॥

ॐ शिल्पविद्याय विद्महे विश्वकर्मणे धीमहि ।

तन्नो वास्तुवेदः प्रचोदयात् ॥

## अथ विश्वकर्मा ऋषि पटलं ॥

याज्ञवल्क्य वाजसनेयिन काण्वौ उवाच ।

अथ मध्ये । इयमुपरि मतिः इति । चन्द्रमा वा उपरि ।

तद्यत्तमाह उपरीति । उपरि हि चन्द्रमाः ।

अथ यन्मतिरित्याह । वाग वै मतिः । वाचा हीदं सर्व मनुते ।

वाग्घ चन्द्रमा भूत्वो परिष्टात्तस्यौ तदेव तद् रूपमुपदधाति ॥ १ ॥

तस्यै वाङ्मात्या इति । वाचं तस्माद् रूपां चन्द्रमसो निरमिमीत ।

हेमन्तो वाच्यः इति । हेमन्तं ऋतुं वाचो निरमिमीत ।

पङ्क्तिर्हैमन्ती इति । पङ्क्ति छन्दो हेमन्तां ऋतोर्निरमिमीत ।

पङ्क्त्यै निधनवत् इति । पङ्क्त्यै छन्दसो निधनवत्साम निरमिमीत ।

निधनवत आग्रयणः इति । निधनवतः साम्न आग्रयणं ग्रहं निरमिमीत ।

**आग्रयणात् त्रिणव त्रयस्त्रिंशौ इति ।**

आग्रयणाद् ग्रहास्त्रिणव त्रयस्त्रिंशौ स्तोमौ निरमिमीत ।

**त्रिणव त्रयस्त्रिंशाभ्यां शाक्वररैवते इति ।**

त्रिणव त्रयस्त्रिंशाभ्यां स्तोमाभ्यां शाक्वररैवते पृष्ठे निरमिमीत ॥ २ ॥

**विश्वकर्मा ऋषिः इति ।** वाग्वै विश्वकर्मर्षिः ।

वाचा हीदं सर्वं कृतं । तस्माद् वाग् विश्वकर्मर्षिः ।

**प्रजापतिगृहीतया त्वया इति ।** प्रजापतिसृष्टया त्वयेत्येतत् ।

**वाचं गृह्णामि प्रजाभ्यः इति ।** वाचमुपरिष्टात्प्रापादयत ।

नानोपदधाति । ये नाना कामाः वाचि तांस्तद् दधाति ।

सकृत्सासयति । एकां तद् वाचं करोति ।

अथ यन्नाना सादयेद् । वाचँ ह विच्छिन्यात् ।

सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ३ ॥

**सारस्वत ऋषि उवाच ॥**

विश्वकर्मा ऋषेर्नाम्ना गुरुत्वात् विश्वकर्मणः ।

स्थपतिः स्थापनं कुर्वन् इति शिल्पि र्विधीयते ॥ ४ ॥

**विश्वकर्मा ऋषि उवाच ॥**

वास्तु शिल्पक विद्याभ्यां वर्त्तयेदेष नित्यशः ।

देवता प्रतिमांचापि कुर्याच्चित्रन्तथैव च ॥ ५ ॥

यज्ञानामपि पात्राणि प्रतिपूर्वं प्रकल्पयेत् ।

सुवर्णाभरणानांच कांचाव्ययस्क्रिया ।

देवतादि तनुनांच करणं शिल्प जीविका ॥ ५ ॥

सौवर्ण वस्तु निर्माणं स्वर्णकार इतीष्यते ।

अयस्कर्मण्ययस्कारस् तक्षा तक्षाक कर्मणि ॥ ६ ॥

तनूनां करणं त्वष्टा स एव रथकृत्भवेत् ।

प्रासादं देवतातीनां स्थापनात् स्थपतिः स्मृतः ॥ ७ ॥

स्थपतिर्विश्वकर्मा तक्षा त्वष्टा च रथकारकः ।

काष्ठको वर्द्धकिश्चेति शिल्पि आचार्योच्यते ॥ ८ ॥

## अथ आचार्य लक्षण पटलं ॥

**विश्वकर्मा ऋषि उवाच ॥**

विश्वकर्मा च आचार्यो गुरुत्वात् वैश्वकर्मणां ।

स्थपतिः स्थापनं कुर्वन् इति शिल्पि विधीयते ॥ १ ॥

स्थपतिस् सत्य शास्त्रकर्म विचक्षणः ।

कृतकृत्यः कुलीमश्च अहीनाधिकक्षणः ॥ २ ॥

धार्मिकः सत्यवादी च गणितज्ञः पुराणविद् ।

चित्रवित् सर्वदेशज्ञः सुनामायमनामयः ॥ ३ ॥

**गार्गेय ऋषि उवाच ॥**

त्वष्टा कृतयुगाचार्य स्त्रेतायां गीष्पति स्तथा ।

द्वापरे विश्वरूपश्च कलौ बोधायन स्मृतः ॥ ४ ॥

गायत्रीं च शची संज्ञा सावित्रीं च सरस्वती ।

एतासां पंच पीठाना मादौ तुर्याश्रितस्थिताः ॥ ५॥

विश्वकर्मा वामदेवो बोधायन सनाभसौ ।

श्रुधीवर्धन ब्रह्मऋषिः आचार्यत्वं प्रचक्षते ॥ ६ ॥

आचार्यो श्रीमुखो नाम त्वष्टृ पुत्रो महातपाः ।

सर्वेषामपि वर्णानां गुरुत्वमगमत्पुरा ॥ ७ ॥

एतदाचार्य वँशेतु शिल्पाचार्योच्यते ।

स एच वेदवेदांग शिल्प शास्त्रार्थ कोविदः ॥ ८ ॥

विना शिल्पीतु यत् किम्चन्न कर्यात् फलभाग्जनः ।

तस्मात् सर्वप्रयत्नेन स्थपतेनैव कारयेत् ॥ ९ ॥

यद्यन्यधा कृतं चैवं कर्तृवंशो विमश्यति ।

नास्माकं च तथारकर्तु किमुनाम्यैरसुधीवर ॥ १० ॥

ब्राह्मण्यं द्विविधं प्रोक्तं पुरा व्यासमहर्षिणा ।

सृष्ट्यादौ ब्रह्मणो जातास्सानगादि महर्षयः ॥ ११ ॥

तद्वँशजास्तु विश्वे ब्राह्मणाः प्रथमोद्भवः ।

शतंच विंशतिः पंच गोत्रोद्भव महौजसः ॥ १२ ॥

विराट् पंचमुखा जातास्ते मन्वादय ईरिताः ।

तत्त एव शिवो विष्णु ब्रह्माचेन्द्रश्च भास्करः ॥ १३ ॥

अथेव प्रतिष्ठायां स्थपतिर्मुख्य कारणं ।

तस्मात्तद्वँश जातानां आचार्यत्वं प्रचक्षते ॥ १४ ॥

**महामय ऋषि उवाच ॥**

अशेषभूतोद्भवकर्म कर्त्ता सुरासुराणां च गुरुस्तथैय ।

विश्वस्य सृष्टिस्थिति नाशहेतुः ।

श्री विश्वकर्मा अखिल देवमुख्यः ॥ १५ ॥

लोहं पाषाणकाष्ठानां मृन्मयानां च शर्करा ।

सुधानां चित्रकानां च बहुदक्षो निर्निमिता ॥ १६ ॥

सूत्रशास्त्र क्रियायाञ्ज मन्त्र तन्त्रार्थकोविदः ।

शिवसंकल्पसूक्तपाठनं मार्जनमाघमर्षणं ॥ १७ ॥

स्नानं सन्ध्या जपं होम स्वाध्यायो ब्रह्मतर्पणं ।

विश्वकर्मकुलाचारः पूर्वोचार विधिक्रमः ॥ १८ ॥

अन्यजात्या न कर्त्तव्यं कर्त्तु भक्त्तुः कुलक्षयं ।

अन्यजात्या प्रवेशेन कर्त्ता भर्त्ता विनश्यति ॥ १९ ॥

आदिमूर्त्ति स्वयं शिल्पी न भेदं शृणु देवी ।

त्रिसन्ध्यावन्दनाच्चैव गायत्री वेदपाठनात् ।

तज्जिह्णा वेदसम्पन्ना तत्कर्मदीक्षया गुरुः ॥ २० ॥

शिल्पिनो हृदयं ब्रह्मा चन्द्रसूर्यौ च चक्षुषी ।

हस्तौ हरिहरौ चैव सर्वाङ्गं सर्वदेवता ॥ २१ ॥

मणिबन्धद्वयं चैवम गणेशषण्मुखस्तथा ।

करयो सर्ववीर्थानि गङ्गायमुनासरस्वती ॥ २२ ॥

दृष्ठिनिर्माणकाले च प्राणसंस्थापनेऽपि च ।

मन्त्र तन्त्र प्रभाबंजः कारयेत् शिल्पिकोत्तमः ॥ २३ ॥

देवतास्थापनं चैव आचार्यो वैश्वकर्मणः ।

स्थपति विश्वकर्मा च आदिब्रह्मकुलोद्भवः ॥ २४ ॥

शिल्पी माता शिला पुत्रो दासत्वं सर्वपूजकाः ।

कर्त्तव्य इन्द्रभोगश्चेदिदं त्रिविधलक्षणं ॥ २५ ॥

माताशास्त्रं पिताशिल्पी पुत्रांश्च सर्वदेवताः ।

सर्वेषां त्वष्टुपुत्राणां दीक्षामोक्षकरो गुरुः ॥ २६ ॥

**मानसर ऋषि उवाच ॥**

आचार्य लक्षणै युक्त्तं स्थपति र्नाम धीयते ।

श्रतज्ञः सूत्रग्राही च रेखाज्ञः शात्रवित्तमः ॥ २७ ॥

विशारज्ञः श्रुतज्ञश्च चित्रकर्मज्ञ वर्धकी ।

तक्षकः कर्मवित् सभ्यो बलबन्धूदयापरः ॥ २८ ॥

श्रुतिशास्त्र प्रकर्तव्य सर्वलक्षणमुच्यते ।

इहैव लोके कृतं विना शिल्पि विना गुरुं ॥ २९ ॥

# विनायक अष्टमंगलानि

## अथ विनायक लक्षण पटलं ॥

**शिल्पकाश्यप विश्वकर्मा ऋषय उवाच ॥**

अथ वक्ष्ये विशेषेण विनायक लक्षणम् ।

पादादुष्णीषपर्यन्तं चतुष्षष्ट्यंशभाजितम् ॥ १ ॥

मूर्धा मस्तकनिम्नान्तं अंगुलद्वयमुच्यते ।

तस्माद्वै नेत्रसूत्रान्तं चतुर्मात्रमुदाहृतम् ॥ २ ॥

नेत्रसूत्राच्च हन्वन्तं भागमष्टांगुलं भवेत् ।

तस्माच्च कर्णमानं स्यात् द्वयंगुलमुदाहृतम् ॥ ३ ॥

मेढ्रादुदरनिष्क्रान्तं वसुमात्रमिति स्मृतम् ।

ऊरुः षडंशमानः स्यात् जानुदीर्घं गुणांगुलम् ॥ ४ ॥

जंघा चोरुसमं दीर्घं गुणं पादतलोन्नतम् ।

सप्तांगुलसमायामं अंगुष्ठादि वसानकम् ॥ ५ ॥

स पादांगुष्ठायतं द्व्यंशं सार्धांशं तु कनिष्ठिका ।

तर्जन्यादिकनिष्ठान्तं प्रत्येकं तु यवोनकम् ॥ ६ ॥

त्रयोदशांगुलं बाहु प्रकोष्ठायां नवांगुलम् ।

चतुर्मात्रं तलायामं अग्न्यंशं मध्यमांगुलम् ॥ ७ ॥

तर्जन्या नामिका द्वौ च एकविंशद्यवं पदम् ।

कनिष्ठांगुष्ठयोश्चैव दीर्घं सप्तदशा यवम् ॥ ८ ॥

द्वादशाष्टौ नवाष्टौ च सप्तसंख्या यवं क्रमात् ।

अंगुष्ठादि कनिष्ठान्तं व्यासमित्यभिधीयते ॥ ९ ॥

तद्व्यासं स त्रिपादं स्यादखे नखव्यासमुदाहृतम् ।

नखव्यासं त्रिपादं स्यादखे नखदीर्घाय वृत्तवत् ॥ १० ॥

वेदं करतलव्यासं मणिबन्धं त्रयर्धकम् ।

प्रकोष्ठान्तं युगांगुल्यं बाहुव्यासं षडर्धकम् ॥ ११ ॥

बाहुमूलं तु वस्वंशं मस्तकोष्टांशकं ततम् ।

सप्तांगुलं नतं निम्नो मुखमध्ये दशांगुलम् ॥ १२ ॥

हस्तमूले षडंगुल्यं नाभ्यन्तं तस्य दीर्घकम् ।

तदंगुलाग्रविस्तारं सार्धमात्रं द्विजोत्तम ॥ १३ ॥

क्रमेण कृशतां हस्तमध्ये तु सुषिरद्वयम् ।

वामदन्तायतद्भवेत् वेदमात्रमित्यभिधीयते ॥ १४ ॥

दक्षिणे दन्तमूलस्य द्ययोच्चं समतलं भवेत् ।

अधरस्य तु निष्क्रान्तात्लम्बनं द्यंगुलं भवेत् ॥ १५ ॥

नेत्रायामविशालं च षड्यवं परिकीर्तितम् ।

कर्णभूतांगुल व्यासं उत्सेधं चैव तत्समम् ॥ १६ ॥

अर्धांगुलं घनं चैव कर्णमूलं द्वियं गुलम् ।

यद्वद्गजाननं तद्वत् कर्तव्यं तु मुखं द्विज ॥ १७ ॥

बाहुपर्यन्तविस्तारं द्वात्रिंशदंगुलं भवेत् ।

एकाने विंशदंगुल्यं कक्षान्तरमुदाहृतम् ॥ १८ ॥

स्तनान्तरं दशांगुल्यं हिक्कायस्तनद्वदेव हि ।

स्तनाक्षं स यवव्यासं द्व्यंगुलं स्तनमण्डलम् ॥ १९ ॥

स्तनतारविशालं तु त्रिःपंचांगुलमुच्यते ।

द्वाविंशदंगुलं ख्यातं मध्योदरविशालकम् ॥ २० ॥

नाभिनिम्नविशालं तु अध्यर्धांगुलमुच्यते ।

लिंगायामं गुणांगुल्यं तस्यार्धं तस्य विस्तृतम् ॥ २१ ॥

मुष्लायामं विशालं तु गुणांगुलमुदाहृतम् ।

ऊरुमूलं द्वादशांगुल्यं ऊरुमध्यं षडर्धकम् ॥ २२ ॥

जानुभागं ततांगुल्यं जंघातारं समांगुलम् ।

नलकातारयुगांशं स्या पंचांशं पादविस्तृतम् ॥ २३ ॥

द्वादशाष्टौ षडर्धं च षटखेपंचकयवं क्रमात् ।

अंगुष्ठादिकनिष्ठान्तं पादांगुलि विशालकम् ॥ २४ ॥

तत्त्रिपादनखव्यासं तदर्धायतमण्डनम ।्

स्थानकं त्वासनं वापि पद्मपीठे विशेषतः ॥ २५ ॥

स्वदन्तं दक्षिणे हस्ते वामहस्ते कपित्थकम् ।

मोदकं गजहस्ते तु अंकुशं दक्षिणे करे ॥ २६ ॥

वामहस्ते तु पाशं वा नागं वा अक्षमालिकाम् ।

त्रिणेत्रं हमे संकाशं दुकूलवसनच्छदम् ॥ २७ ॥

आभंगं समभंगं वा स्थानके तु प्रकल्पयेत् ।

आसने त्वासनं चेतु वामपादं तु शाययेत्॥ २८॥

वामेतरोरुमूर्ध्वस्थ पादेनोकुटिकासनम्।

ईषद्वक्रतनुर्वामे कर्तव्यं तु विशेषतः॥ २९॥

व्यालयज्ञोपवीतं तु किरीटमकुटान्वितम्।

सर्वाभरणसंयुक्तं महाकायं महोदरम्॥ ३०॥

## अथ विनायक प्रतिष्ठा विधि पटलं॥

**विश्वकर्मा ऋषि उवाच॥**

अथ संवक्ष्ये विनायक प्रतिष्ठा लक्षणम्।

तेषां मन्त्रक्रियाश्चैव कथयामि समासतः॥ १॥

आदौ पादप्रतिष्ठा स्यात् तत्र कूर्मं च स्थापयेत्।

शिला प्रतिष्ठा द्वितिया पीठान्ते भित्तिमध्यतः॥ २॥

उदुम्बरस्तृतीया च द्वारस्थापननामतः।

पद्माकारा पद्मशिला प्रतिष्ठा सा चतुर्थिका॥ ३॥

प्रासादे पंचमी चैवं पुरुषस्य निवेशनं।

षष्ठी च कलशारोपः प्रासादाग्रे च यो भवेत्॥ ४॥

महायज्ञो महोत्साहो ध्वजानां तु समुच्छ्रयः।

सा सप्तमी प्रतिष्ठा च प्रयुक्ता वास्तुवेदिभिः॥ ५॥

आलयमण्टमे दक्षिणे भद्रे स्थापयेत्तु विनायकं।

सप्तमातृणां दक्षिणे वीरभद्रं वामे विनायकं ।

एकबेरन्तु वा याम्ये नैऋऋत्यां वा विनायकं ॥ ६ ॥

## अथ विनायक प्रासाद् लक्षण पटलं ॥

**विश्वकर्मा ऋषि उवाच ॥**

अथ वक्ष्ये विनायक प्रासाद् लक्षणम् ।

विभक्ति दशधा क्षेत्रे कारयेत् लताख्यजं ।

तस्य द्वितीयोरुशार्ङ्गं गुहाधारः स उध्यते ॥ १ ॥

भद्रके कर्णजा रेखा भद्रोद्गम विभूषिता ।

श्लाको नाम विज्ञेयो वेणुको रुचकोङ्गमैः ॥ २ ॥

द्राविडे त्वेकभूमिश्चेत् कुंजरः सर्वकामदः ।

त्रिभूमो द्राविडस्त्र्यङ्को भवेद्धर्षाभिधानकः ॥ ३ ॥

लतिने वर्धमानश्चेद् विजयो भद्रकोद्गमै ।

अष्टभद्रं विना कर्णैरुदकुम्भः स कामदः ।

मोदकश्चैत्यकाकारः शिखरं बलिकोन्यतः ॥ ४ ॥

## अथ गणेशायतने द्वारदेवता पटलं ॥

**विश्वकर्मा ऋषि उवाच ॥**

अथ वक्ष्ये गणेशायतने द्वारदेवता लक्षणम् ।

अविघ्नो विघ्नराजश्च सुवक्त्रो बलवानथ।

गजकर्णश्च गोकर्णः सुसौम्यः शुभदायकः॥ १॥

दिग्द्वारस्था युग्मतश्च एते विघ्नविनाशनाः।

इत्यष्टा च गणेशस्य प्रतिहाराः शुभप्रदाः॥ २॥

## अथ गणेशायतने मूर्त्तिलक्षण पटलं॥

**विश्वकर्मा ऋषि उवाच**

वामांङ्गे गजकर्णे तु सिद्धिदक्षा तु दक्षिणे।

पृष्ठकर्णे तु द्वाभ्या तु धूम्र केवलं चन्द्रमा॥ १॥

उत्तरे तु तदा गौरि याम्यै श्वैव सरस्वती।

पश्चिमे यक्षराज तु बुद्धिपूर्वेषु संस्थिता॥ २॥

वामनाकानसर्वेश पुरुषाननसौम्यत।

तर्जनी परशुपद्मदण्ड तु अविघ्नं दण्डहस्तकं॥ ३॥

तर्जनी दण्डापसत्ये स भवेद्विधराजका।

तर्जनी खङ्गखेट तु दण्ड हरतै सुवक्त्रक॥ ४॥

तर्जनी दण्डापसव्ये बलवांश्च दक्षिणे।

तर्जनी वाण चाप च गजकर्णा हस्त दण्डक॥ ५॥

तर्जनी दण्डापसव्ये गोकर्णः प्रति पश्चिमे।

तर्जनी पद्मंकुशं च दण्ड हस्तस्तु सोम्यक॥ ६॥

तर्जनी दण्ड पसव्ये अभय शुभदायक ।

पक्ष द्वरेषु दिक् सर्वेषु अष्टो विघ्नविनाशकः ॥

दन्तंच परशुं पद्मं मोदकंच गजाननः ।

गणेशो मूषकारूढो बिभ्राणः सर्वकामदः ॥ इति गणेशः ॥ ७ ॥

वरं तथाऽङ्कुशं दन्तं दक्षिणे पार्श्वधाभयौ ।

वामे कपालं बाणाक्षं पाशं कौमोदकी तथा ॥ ८ ॥

धारयन्तं करै रम्यैः पंचवक्त्तं त्रिलोचनं ।

हेरम्ब भूषकारूढं कुर्यात् सर्वार्थकामदं ॥ हेरम्बः ॥ ९ ॥

लम्बोदरं त्रिनयनं पाशांकुशधरं परं ।

वरदाभयहस्तश्च लसत्कर्णं सचामरं ॥ वक्त्रतुण्डः ॥ १० ॥

## अथ द्वात्रिंशद्गणपति ध्यानानि विधि पटलं ॥

मुद्गल महत्रृषि उवाच ॥

बालस्तरुणभक्तौ च वीरश्शक्तिर्द्विजस्तथा ॥

सिद्ध उच्छिष्टविघ्नेशौक्षिप्रोहेरंबनामकः ॥ १ ॥

लक्ष्मीगणपतिश्चैव महाविघ्नेश्वरस्तथा ॥

विजयःकल्पनृत्तश्चाप्यूर्ध्व विघ्नेश उच्यते ॥ २ ॥

एकाक्षरोवरश्चैव त्र्यक्षरःक्षिप्रदायकः ॥

हरिद्राख्यश्चैकदंतस्सृष्टिरुद्दंडनामकः ॥ ३ ॥

ऋणमोचनकोढुंडिर्द्विमुखस्त्रिमुखस्तथा ॥

सिंहोयोगश्च दुर्गा च देवस्संकटहारकः ॥ ४ ॥

द्वात्रिंशद्विघ्नराजाख्यास्तेषां ध्यानमथोच्यते ॥

### अथ बालगणपतिध्यानम् ॥ १ ॥

करस्थकदलीचूतपनसेक्षुकमोदकम् ॥

बालसूर्यमिमंवंदे देवंबालगणाधिपम् ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ तरुणगणपतिध्यानम् ॥ २ ॥

पाशांकुशापूपकपित्थ जंबूस्वदंतशालीक्षुमपि स्वहस्तैः ॥

धत्ते सदायस्तरुणारुणाभः पायात्सयुष्मांस्तरुणोगणेशः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### अथ भक्तगणपतिध्यानम् ॥ ३ ॥

नालिकेराम्रकदलीगुडपायसधारिणम् ॥

शरच्चन्द्राभवपुषंभजे भक्तगणाधिपम् ॥ १ ॥

श्वेतवर्णः ॥१ ॥

### अथ वीरगणपतिध्यानम् ॥ ४ ॥

बेतालशक्तिशरकार्मुकचक्रखड्गखट्वांगुद्गरगदांकुशनागपाशान् ॥

शूलं च कुंतपरशुध्वजमुद्वहंतं वीरंगणेशमरुणं सततंस्मरामि ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ शक्तिगणपतिध्यानम् ॥ ५ ॥

आलिंग्यदेवींहरितांगयष्टिं परस्परश्लिष्टकटिप्रदेशम् ॥

संध्यारुणं पाशसृणीवहंतं भयापहं शक्तिगणेशमीडे ॥ १ ॥ सिंदूरवर्णः ॥ १ ॥

## अथ द्विजगणपतिध्यानम् ॥ ६ ॥

यं पुस्तकाक्षगुणदंडकमंडलु श्रीविद्योतमानकरभूषणमिंदुवर्णम् ॥

स्तंबेरमाननचतुष्टयशोममानंत्वांयः स्मरेद्द्विजगणाधिपतेसधन्यः ॥ शुभ्रवर्णः ॥ १ ॥

## अथ सिद्धगणपतिध्यानम् ॥ ७ ॥

पक्वचूतफलपुष्पमंजरीरिक्षुदंडतिलमोदकैस्सह ॥

उद्वहन्परशुमस्तु तेनमश्रीसमृद्धियुत हेमपिंगल ॥ १ ॥

पिंगलवर्णः ॥ १ ॥

## अथ उच्छिष्टगणपतिध्यानम् ॥ ८ ॥

नीलाब्जदाडिमी वीणाशालिगुंजाक्षसूत्रकम् ॥

दधदुच्छिष्टनामायं गणेशः पातुमेचकः ॥ १ ॥

प्रकारांतरेण नारीयोनिरसास्वादलोलुपं काममोहितम् ॥ २ ॥

नीलवर्णः ॥ १ ॥

## अथ विघ्नगणपतिध्यानम् ॥ ९ ॥

शंखेक्षुचापकुसुमेषुकुठारपाशचक्रस्वदंतसृणिमंजरिका शराद्यैः ॥

पाणिश्रितैः परिसमीहितभूषणश्रीर्विघ्नेश्वरोविजयतेत पनीयगौरः ॥ स्वर्णवर्णः ॥ १ ॥

## अथ क्षिप्रगणपतिध्यानम् ॥ १० ॥

दंतकल्पलतापाशरत्नकुंभांकुशोज्ज्वलम् ॥

बंधूककमनीयाभं ध्यायेत् क्षिप्रगणाधिपम् ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ हेरंबगणपतिध्यानम् ॥ ११ ॥

अभयवरदहस्तः पाशदंताक्षमालासृणिपरशुदधानोमुद्गरंमोदकं च ॥

फलमधिगतसिंहः पंचमातंगवक्रोगणपतिरतिगौरः पातुहेरंबनामा ॥ गौरवर्णः ॥ १ ॥

### अथ लक्ष्मिगणपतिध्यानम् ॥१२ ॥

बिभ्राणश्शुकबीजपूरकमिलन्माणिक्य

कुंभांकुशान् पाशंकल्पलतां च

खड्गविलसज्ज्योतिस्सुधानिर्झरः ॥

श्यामेनात्तसरोरुहेणसहितं देवीद्वयंचांतिके गोरांगौवरदानहस्तसहितोलक्ष्मी गणेशोवतात् ॥

गौरवर्णः ॥ १ ॥

### अथ महागणपतिध्यानम् ॥ १३ ॥

हस्तींद्राननमिंदु चूडमरुणच्छायं त्रिणेत्रंरसादाश्लिष्टं प्रिययासपद्मकरयास्वांकस्थया

संततम् ॥

बीजापूरगदेक्षुकार्मुकलसच्चक्राब्जपाशोत्पल

व्रीह्यग्रस्वविषाणरत्नकलशान्भहस्तैर्वहंतंभजे ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ विजयगणपतिध्यानम् ॥ १४ ॥

पाशांकुशस्वदंताम्रफलवानाखुवाहनः ॥

विघ्नंनिहंतुनस्सर्वं रक्त्वर्णो विनायकः ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ नृत्तगणपतिध्यानम् ॥ १५ ॥

पाशांकुशापूपकूठारदंतचंचत्कराक्लृप्त वरांगुलीकम् ॥

पीतप्रभंकल्पतरोरधस्थंभजामि नृत्तोपपदंगणेशम् ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ ऊर्ध्र्वगणपतिध्यानम् ॥ १६ ॥

कह्लारशालिकमलेक्षुकचापबाणदंतप्ररोहकगदिकनकोज्ज्वलांगः ॥

आलिंगनोद्यतकरोहरितांग यष्ट्यादेव्याकरोतु शुभमूर्ध्वगणाधिपोमे ॥  कनकवर्णः ॥ १ ॥

### अथ एकाक्षरगणपतिध्यानम् ॥ १७ ॥

रक्तोरक्तांगरागांशुककुसुमयुतस्तुंदिलश्चंद्रमौलि

नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोबीजपूरंद्धानः ॥

हस्ताग्राक्लृप्त पाशांकुशरदवरदोनागवक्त्रो हि भूषोदेवः

पद्मासनस्थोभवतु सुखकरोभूतये

विघ्नराजः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### अथ वरगणपतिध्यानम् ॥ १८ ॥

सिंदूराभमिभाननं त्रिनयनं हस्ते च पाशांकुशौबिभ्राणं

मधुमत्कपालमनिशंसाध्विंदुमौलिंभजे ॥

पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरयापद्मोल्लसद्धस्तया तद्योन्या

हितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ त्र्यक्षरगणपतिध्यानम् ॥ १९ ॥

गजेंद्रवदनं साक्षाच्चलत्कर्णसुचामरम् ॥

हेमवर्णं चतुर्बाहुंपाशांकुशधरंवरम् ॥ १ ॥

स्वदंतं दक्षिणेहस्ते सव्येत्वाम्रफलं तथा ॥

पुष्करैर्मोदकं चैव धारयंतमनुस्मरेत् ॥ २ ॥

स्वर्णवर्णः ॥ १ ॥

### अथ क्षिप्रप्रसादगणपतिध्यानम् ॥ २० ॥

धृतपाशांकुशकल्पलता स्वरदश्च बीजपूरयुतः ॥

शशिशकलकलितमौलिस्त्रिलोचनोरुणश्च गजवदनः ॥ १ ॥

भासुरभूषणदीप्तोबृहदुदरः पद्मविष्टरोल्लसितः ॥

विघ्नपयोध्रपवनःकरधृतकमलस्सदास्तुमे भूत्यै ॥ २ ॥

रक्तवर्णः ॥ १ ॥

### अथ हरिद्रागणपतिध्यानम् ॥ २१ ॥

हरिद्राभं चतुर्बाहुं हरिद्रावदनंप्रभुम् ॥

पाशांकुशौधरं देवं मोदकंदंतमेव च ॥ १ ॥

भक्ताभयप्रदातारंवंदे विघ्नविनाशनम् ॥

हरिद्रावर्णः ॥ १ ॥

### अथ एकदंतगणपतिध्यानम् ॥२२ ॥

लंबोदरं श्यामतनुं गणेशं कुठारमक्षस्त्रजमूर्ध्वगात्रम् ॥

सलड्डुकंदंतमधः कराभ्यां वामेतराभ्यां च दधानमीडे ॥ १ ॥ श्यामवर्णः ॥ १ ॥

### अथ सृष्टिगणपतिध्यानम् ॥ २३ ॥

पाशांकुशस्वदंताम्रफलवानाखुवाहनः ॥

विघ्नंनिहंतु नश्शोणः सृष्टिदक्षोविनायकः ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ उद्दंडगणपतिध्यानम् ॥ २४ ॥

कल्हारांबुजबीजपूरकगदादंतेक्षुचापंसुमंबिभ्राणो

मणिकुंभशालिकलभशौपाशं सृणिंचाब्जकम् ॥

गौरांग्यारुचिरारविंदकरया देव्या

समालिंगितश्शोणांगश्शुभमातनो तु

भजतामुद्दंडविघ्नेश्वरः ॥ १ ॥

रक्तवर्णः ॥ १ ॥

### अथ ऋणमोचकगणपतिध्यानम् ॥ २५ ॥

पाशांकुशौदंत जंबुदधानस्स्फटिकप्रभः ॥

रक्तांशुकोगणपतिर्मुदे स्याद्दणमोचकः ॥ १ ॥

श्वेतवर्णः ॥ १ ॥

### अथ ढुंडिगणपतिध्यानम् ॥ २६ ॥

अक्षमालांकुठारं च रत्नपात्रंस्वदंतकम् ॥

धत्तेकरैर्विघ्नराजोढुंढिनामामुदेस्तुनः ॥ १ ॥

रक्तवर्णः ॥ १ ॥

## अथ द्विमुखगणपतिध्यानम् ॥ २७ ॥

स्वदंतपाशांकुशरत्नपात्रं करैर्दधानोहरिनीलगात्रः ॥

रक्तांशुकोरत्नकिरीटमालीभूत्यै सदामेद्विमुखोगणेशः ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

## अथ त्रिमुखगणपतिध्यानम् ॥ २८ ॥

श्रीमत्तीक्ष्णशिखांकुशाक्षवरदान्दक्षेदधानः

करैः पाशंचामृत पूर्णकुंभमभयं वामेदधानोमुदा ॥

पीठे स्वर्णमयारविंदविलसत्सत्कर्णिकाभासुरे

स्वासीनस्त्रिमुखः पलाशरुचिरोनागाननः पातुनः ॥ १ ॥

रक्तवर्णः ॥ १ ॥

## अथ सिंहगणपतिध्यानम् ॥ २९ ॥

वीणांकल्पलतामरिं च वरदंदक्षेविधत्तेकरैर्वामेतामरसंच

रत्नकलशं सन्मंजरींचाभयम् ॥

शुंडादडलसन्मृगेंद्रवदनः खेंदुगौरः शुभोदीव्यद्रत्ननिभांशुको

गणपतिः पायादपायात्सनः ॥

श्वेतवर्णः ॥ १ ॥

## अथ योगगणपतिध्यानम् ॥ ३० ॥

योगारूढोयोगपट्टाभिरामोवालार्काभश्चेंद्रनीलांशुकाढ्यः ॥

पाशेक्ष्वक्षान्योगदंडंदधानोपायान्नित्यं योगविघ्नेश्वरोनः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## अथ दुर्गागणपतिध्यानम् ॥ ३१ ॥

तप्तकांचनसंकाशश्चाष्टहस्तोमहत्तनुः ॥

दीप्तांकुशंशरंचाक्षंदंतं दक्षेवहन्करैः ॥ १ ॥

वामे पाशंकार्मुकं चलतांजंबुदधत्करैः ॥

रक्तांशुकस्सदाभूयाद्दुर्गागणपतिर्मुदे ॥ २ ॥

कनकवर्णः ॥ १ ॥

## अथ संकष्टहरगणपतिध्यानम् ॥ ३२ ॥

बालार्कारुणकांतिर्वामे बालांवहन्नंके ॥

लसदिंदीवरहस्तांगौरांगीं रत्नशोभाढ्याम् ॥ १ ॥

दक्षेंकुशवरदानं वामे पाशं च पायसंपात्रम् ॥

नीलांशुकलसमानः पीठेपद्मारुणे तिष्ठन् ॥ २ ॥

संकटहरणःपायात्संकटपूगाद्गजाननोनित्यम् ॥

रक्त्वर्णः ॥ १ ॥

## अथ वास्तुशान्ति विधि पटलं ॥

**विश्वकर्मा ऋषि उवाच ॥**

अथ संवक्ष्ये वास्तुदेवता शान्तिपूजा विधि ।

मध्ये नवपदो ब्रह्मा पीतश्वेतश्चतुर्भुजः ।

आब्रह्मन् ब्रह्मण इति मन्त्रोयं समुदाहृतः ॥ १ ॥

अर्य्यमा कृष्णवर्णश्च अर्यम्ना च बृहस्पतिः ।

सविता रक्तवर्णस्तु उपयाम गृहीतकम् ॥ २ ॥

विवस्वान् शुक्लवर्णश्च विवस्वानादित्यमन्त्रतः ।

इन्द्रो रक्तेन्द्रसूत्रामा मन्त्रोयं समुदाहृतः ॥ ३ ॥

मित्रः श्वेतश्च तन्मित्रं वरुणस्याभिचक्षत्विति ।

राजयक्ष्मा रक्तवर्णो ह्याभिगोत्राणि मन्त्रतः ।

पृथ्वीधरो रक्तवर्णः पृथिवीच्छन्दमन्त्रतः ॥ ४ ॥

आपवत्सः शुक्लवर्णो भवामेति च मन्त्रतः ॥ ५ ॥

आपः शुक्लवर्णश्च तद्वाह्ये आपो अस्मान्मातरेति च ।

सावित्र्याग्नये दिग्भागे शुक्लवर्णैकपात्तथा ॥ ६ ॥

उपयामगृहीतोसि सवितासीति मन्त्रतः ।

जयन्तः श्वेतो नैर्ऋत्ये मर्माणि तेति मन्त्रतः ॥ ७ ॥

रुद्रो रक्तश्च वायव्ये सूत्रामा इति मन्त्रतः ।

ईशाने रक्तवर्णश्च तमीशानेति वै शिखी ॥ ८ ॥

जर्यन्यः पीतवर्णश्च तमीशानेति वै तथा।

जयन्तः पीतवर्णश्च धन्ननागा इति स्मृतः॥ ९॥

कलिशायधु : पीतवर्णो महा इन्द्रेति वै तथा।

सूर्यो रक्तः सूर्यरश्मिर्हरिकेति च मन्त्राः॥ १० ॥

सत्यश्च शुक्लव्रतेन दीक्षामाप्नोति मन्त्रतः।

भृशः कृष्णो मन्त्रमस्य भद्रङ्करणेभिरेव च॥ ११ ॥

अन्तरिक्षः कृष्णवर्णो वयं सोमश्च इत्यपि।

वायुर्धूम्रस्तथावर्ण आवयोरिति मन्त्रतः॥ १२ ॥

पूषा च रक्तवर्णश्च पूषन्तव इतीरितः।

शुक्लवर्णश्च वितथं सविता प्रथमेति च॥ १३ ॥

गृहक्षतः पीतवर्णः सविता त्वेति मन्त्रतः।

यमः कृष्णवपुर्याम्ये यमाय त्वा मखाय च॥ १४ ॥

गन्धर्वो रक्तवर्णच पृतद्वो वेति मन्त्रतः।

भृङ्गराजः कृष्णवर्णो मृत्युः सुपर्णोति वा तथा॥ १५॥

मृगः पीतश्च तद्विष्णोर्मन्त्रेण निर्ऋतिस्थितः।

पितृगणा रक्तवर्णाः पितृ यश्चेति पूजयेत्॥ १६ ॥

दौवारिको रक्तवर्णो द्रविणोदाः पिपीषति।

शुक्लवर्णश्च सुग्रीवः सुषुम्नः सूयर्र श्मिना॥ १७ ॥

पुष्पदन्तो रक्तवर्णो नक्षत्रे येति मन्त्रतः।

वरुणः शुक्ल इतरो मित्रास्य वरुणास्यतः ॥ १८ ॥

असुरः पीतरक्तश्च ये रूपाणीति मन्त्रतः ।

शोकः कृष्णवपुर्मन्त्रमासवे स्वाहेत्यावाहयेत् ॥ १९ ॥

पापयक्ष्मा पीतवर्णः सूर्यरश्मीति मन्त्रतः ।

रक्तवर्णस्तथा रोगः शिरो मे इति कोणके ॥ २० ॥

द्विपदोहिवायुर्कोणे नमोस्तु सर्पे यश्च ।

मुख्यो रक्तवपुः कार्य इषे त्वा इति पूजयेत् ॥ २१ ॥

भल्लाटकः कृष्णवर्णो बन्महाँसीति मन्त्रतः ॥

सोमः श्वेतश्चोत्तरे च वयसोमेति मन्त्रतः ॥ २२ ॥

सर्पः कृष्णवपुः पूज्य उदुत्यं जातवेदसम् ।

अदितिः पीतवर्णा तु उतनोहिर्बुध्न्यमन्त्रतः ॥ २३ ॥

दितिः पीता अदितिर्द्यौर्मन्त्रेणेशानकोणके ।

ईशानादिक्रमेणैव स्थाप्याः पूज्याः स्वमन्त्रतः ॥ २४ ॥

नाममन्त्रेण वा स्थाप्याः पूज्याश्चैव यथाक्रमात् ।

भूर्भुवःस्वेति मन्त्रेण प्रणबाद्येन नामकैः ॥ २५ ॥

ईशाने चरकी स्थाप्या धूम्रवर्णाथ बाह्यगाः ।

ईशावास्येति मन्त्रेण स्थाप्याः पूज्याः प्रयत्नतः ॥ २६ ॥

विदारिका रक्तवर्णा अग्निं दूतेति मन्त्रतः ।

पूतना पीतहरिता नमः स्वस्त्याय मन्त्रतः ॥ २७ ॥

पापराक्षसी कृष्णाभा वायव्यैरिति मन्त्रतः ।

बहिरेव च पूर्वादिक्रमेण च ततोर्च्चयेत् ॥ २८ ॥

रक्तकृष्णः स्कन्धघटी एह्यत्र मयमन्त्रतः ।

अर्यमा दक्षिणे कृष्ण अर्यम्ना च बृहस्पतिः ॥ २९ ॥

पश्चिमे रक्तवर्णस्तु जम्भकः परिकीर्तितः ।

सरो यो भैरवं मन्त्रं समुच्चार्य प्रपूजयेत् ॥ ३० ॥

पिलिपिञ्जः पीतवर्णः कायम्भमरेति मन्त्रतः ।

भीमरूपस्तथेशाने यमाय त्वेति रक्तकः ॥ ३१ ॥

त्रिपुरारिः कृष्णवर्णस्त्र्यम्बके त्वग्निकोणके ।

अग्निजिह्वस्तु नैऋत्य असुन्वं त्वेति पीतकः ॥ ३२ ॥

करााल रक्तवर्णा तु वातो ह त्वा हनास्थितः ।

हेतुकः पूर्वदिक कृष्णो हेमन्ते ऋतुना तथा ॥ ३३ ॥

अग्निवेतालके याम्ये कृष्णोग्निं दूतमित्यपि ।

कालाख्यः पश्चिमे कृष्णो वरुणस्योत्तम्भनं तथा ॥ ३४ ॥

एकपादः पीतवर्णः कविदाङ्गेति चोत्तरे ।

ईशानपूर्वयोर्मध्ये गन्धमाल्यश्च पीतकः ॥ ३५ ॥

गन्धद्वारेति मन्त्रेण पूज्यमानोन्तरीक्षके ।

नैऋत्यां बुद्धिमध्यस्थो ज्वालाख्यः श्वेतरूपधृक ॥३६ ॥

महि द्यौरिति मन्त्रेण पूजनीयो विधानतः ।

या बाह्यदेवताः प्रोक्ताः प्रासादे ताः प्रपूजयेत् ॥ ३७ ॥

## अथ कुम्भाभिषेक विधि पटलं ॥

**मानसार ऋषि उवाच ॥**

सृष्टिं विश्वकर्माणं ध्यानं कृत्वा तु वार्चयेत् ।

सृष्टिस्थिति लयाधारं भुवनाधिपतिं मनाक् ॥ १ ॥

स्तूपिकील प्रतिष्ठा च लक्षणं वक्ष्यतेऽधुना ।

प्रासादाभिमुखो वापि चोत्तरे चैशके वापि ॥ २ ॥

यागमण्डप सङ्कल्प्य चोक्तवल्लक्षणान्वितं ।

अङ्कुरार्पणमादौ च कारयेदधिवासनं ॥ ३ ॥

मण्डपे स्थण्डिलं कृत्वा शालिभिश्च स्थलं न्यसेत् ।

पंचविशतपदं न्यस्य शुद्धतण्डुलरेखया ॥ ४ ॥

दर्भैरास्तीर्य तत्पश्चात् पाक्षालनं कुरु ।

ततश्चाचमनं कुर्यात्सकलीकरणं कुरु ॥ ५ ॥

पुण्याहं वाचयित्वा तु स्थपतिर्ब्रह्मणैः सह ।

ब्रह्मादि देवतानां च गन्दपुष्पादि धूपकैः ॥ ६ ॥

स्तूपिकीलं समुद्धृत्य स्थण्डिलोपरि विन्यसेत् ।

ईशास्यानः प्रदेशे तु मूककुम्भं विनिक्षिपेत् ॥ ७ ॥

ससूत्राङ्ग सवस्त्रं च सकुर्चान् रुद्रपल्लवान् ।

सविधानफलं युक्तं परितेऽष्टघटान्नयसथत्॥ ८॥

कीलस्य पूर्वदिग्देशे रत्नलोहैश्च निक्षिपेत्।

नववस्त्रे सकुर्च च आच्छाद्य रत्नपात्रकं॥ ९॥

स्तूपिकीलं च संछाद्य नववस्त्रेण कूर्चकं।

आराध्य मूलकुम्भे तु भुवनाधिपतिं जपेत्॥ १०॥

गन्धपुष्पैः समभ्यर्च्य नैवेद्यानि निवेदयेत्।

धूपदीपं दद्येत् पश्चान् नृत्तगीतादि घोषणैः॥ ११॥

इन्द्रादि चाष्टकुम्भानामष्ट शक्तीः प्रपूजयेत्।

प्रणवादि नमोऽन्तेन तत्तन्नाम्ना प्रपूयेत्॥ १२॥

स्तूपिकीलं समभ्यर्च्य गन्धपुष्पैश्च धूपकैः।

कुण्डे वा स्थण्डिले वापि होमं कुर्यात्तदग्रके॥ १३॥

समिदा चरुं लाजान् प्रत्येकं पंचविंशति।

हृल्लेखाबीजमुच्चार्य प्रणवादि नमोऽन्तकं॥ १४॥

व्याहृत्यान्ते ततः शिल्पी स्थण्डिले प्रान्तमाश्रयेत्।

यद्यद्देवालये कीलं ध्यात्वा तत् पररुपकं॥ १५॥

तत्तन्मन्त्रं समुच्चार्य चार्चयेत् स्तूपिकीलकं।

तत्तद्देवासनं ध्यात्वा चतुर्मूर्ध्नेष्टकान् सुधीः॥ १६॥

नवनस्त्रेण गोप्याङ्गमिष्टकैरक्षरं लिखेत्।

प्रागाच्च सहकारदि शस्त्रेण रेखयेत्॥ १७॥

स्तूपिकीलं चतुर्दिक्षु सूत्रं प्रागादि लेखयेत्।

श्रीवत्साकारमग्रे तु वक्त्रं धृत्वा लिखेद्बुधः॥ १८॥

स्वस्ति वाचक घोषेण यजशब्दादि मङ्गलैः।

गैरिकं वै मधुक्षीरं स्वर्णतूलिकया लिखेत्॥ १९॥

वस्त्रमाच्छादनं तत्र वत्सगोकन्यकैः सहः।

मधुसर्पि धान्यराशिं दर्शयेच्छिल्पिवित्तमः॥ २०॥

आराध्य गन्धपुष्पैश्च सर्वमङ्गलघोषणैः।

नाना वस्त्रेण संवेष्टय पुष्पमाल्यैरलङ्कृतं॥ २१॥

लंबकूर्च समभ्यर्च्य ग्रामादीनां प्रदक्षिणं।

स्तूपिकीलं समादाय आरुरोह विमानकं॥ २२॥

पालिकोपति तत् प्रान्ते नासिकोपरि प्रान्ते च।

रत्नगर्त तु संकल्प्य कीलं प्राग्दर्शनं न्यसेत्॥ २३॥

नवरत्नानि लोहैश्च तत्तन्मन्त्रेण चार्चयत्।

त्रित्रिकोष्ठे तु तद्गर्भे तन्मध्ये स्वर्ण विनिक्षिपेत्॥ २४॥

इन्द्रे ताम्रं विनिक्षिप्य याम्ये निक्षिप्य चायसं।

पश्चिमे अत्र प्रविप्रवालं न्यस्य चोत्तरे रजतं क्षिपेत्॥ २५॥

मध्ये तु पद्मरागं तु वज्रं चैवेन्द्रकोष्ठके।

विद्रुमं चाग्निकोणे तु याम्ये नीलं तु विन्यसेत्॥ २६॥

नैर्ऋत्ये पुष्परागं तु प्रत्यङ् मरकतं क्षिपेत्।

गोमेदकं न्यसेद् वायौ सौम्ये मौक्तिक विन्यसेत्॥ २७॥

ईशे स्फाटिक निक्षित्य तत् तद् देवान् स्वनामतः।

प्रणवादि नमोऽन्तेन चोच्चरन् रत्नं विन्यसेत्॥ २८॥

स्थपतिर्वरवेषाढ्यः प्राप्तपंचांगभूषणः।

सुमुहूर्ते सुलग्ने च जयशब्दादि मंगलैः॥ २९॥

ब्राह्मणैश्च यथाशक्या वाचयेत् स्वस्ति वाचनं।

स्तूपिकीलं समुद्धृत्य स्थपतिः स्थापकैः सह॥ ३०॥

एतद्गर्तोपरि स्थाप्य मूलमन्त्रं समुच्चरन्।

स्तूपिकीस्य पतिः स्थापयेच्चतुरिष्टकं॥ ३१॥

पूर्वादि च शकारादीं नन्द्यावर्त क्रमान्नयसेत्।

प्राक् मूलकुम्भतोयेन पूजयेच्चतुरिष्टकान्॥ ३२॥

शुद्धतोयेन सम्पूर्य गन्धपुष्पैः समर्चयेत्।

पूर्ववत् समलङ्कृत्य नैवेद्यादि निवेदयेत्॥ ३३॥

षोडशोपचारांश्च कुर्याद् गन्धाक्षतैः सह।

स्तूपहिर्म्ये मूर्ध्नस्तु हंसपादः स्थितो भवेत्॥ ३४॥

नमस्ते कर्तृराज्यादि ग्रामं रक्षतु सर्वदा।

सुधागुलोदकं चापि इष्टकैर्बदुभिस्ततः॥ ३५॥

तूपिकीलं दृढीकृत्य पश्चात् प्रागुक्तवत् करु।

ब्रह्मा विष्णु महेश्वरस्य स्तूपिप्रतिष्ठां कुरु॥ ३६॥

कुर्वन्तद्यजमानगृहे नृपालये भुक्त्तिं मुक्त्तिमावहेत्।

यस्मादकुर्वन्नारदनरनृपतयोः कर्ताश्च पीडा भवेत्॥ ३७॥

तस्मात् सर्वसुखदं नृपगृहे कुर्यात्स देवाकये।

विप्रवाहनयुतं च सद्गुरुं शिल्पिनान्दि गजवाजनस्तथा॥ ३८॥

नृत्तगीत सह सर्वघोषणैः सेवितानि स्वगृहंप्रेशयेत्॥ ३९॥

## अथ नयनोन्मोक्षण विधि पटलं॥

**ऋषि मानसारोवाच॥**

देवानामपि देवीनां भक्त्तानां नेत्रमोक्षणं।

लिङ्गानां लक्षणोद्धारं वस्त्वादीनां यथाक्रमं॥ १॥

स्थपतिः प्रकृतिः प्रोक्तः स्थापको जीवमिष्यते।

तस्मात् क्रियारम्भतः सह कुर्यात्तु संसदा॥ २॥

अकृवा नयनोन्मोक्षं चक्षुरोगो भवेद् ध्रुवं।

तस्मात्तु नयनोन्मोक्ष लक्षणं वक्ष्यतेऽधुना॥ ६॥

हर्म्ये वा मण्डमे वा अपि स्थपति स्थापकावुभौ।

स्थापनात् पूर्वके कुर्यादुक्त्तवदङ्कयरार्पणं॥ ७॥

पश्चात्तु सुमुहूर्ते च कुर्यान्नयनमोक्षणं।

प्रासादाभिमुखे चैव चोत्तरे वाथ दक्षिणे॥ ८॥

नयनोन्मीलनं यागमण्डपं कल्पयेत्सुधीः।

नवहअतं सप्तहस्तं पंचहस्तमथाभि वा ॥ ९ ॥

चतुरश्रसमााकरं षोडशस्तंभमेव च ।

द्वादशस्तंभमेव वा कूटं वाथ प्रपाङ्गकं ॥ १० ॥

चतुर्दिक्षी   चतुर्द्वारं चतुस्तोरणसंयुतं ।

तन्मण्डपस्य मध्ये तु वेदिं कुर्यात्तु चोक्तवत् ॥ ११ ॥

तदग्रे च अग्निकुण्डं स्याद् गेमयालेपनं भवेत् ।

विधान ध्वज संयुक्तं नाना वस्त्रेण संयुतं ॥ १२ ॥

पादानां समलङ्कृत्य कदली फलैर्युतं ।

परितश्चोध्वर्दिशे तु रम्भामाल्यैरलङ्कृतं ॥ १३ ॥

पुष्पमाल्यैरलङ्कृत्यः रत्नैः सर्वैरलङ्कृतं ।

पश्चात्तु शिल्पिभिः प्राज्ञाः कुर्यात् नयनमोक्षणं ॥ १४ ॥

वेदिका पश्चिमे वाथ दक्षिणे वाथ नैर्ऋते ।

कल्पयेत् स्थण्डिलं वाथ दारु पीठमथापि वा ॥ १५ ॥

तदूर्ध्वे स्थापयेत् बिम्बं सकूर्चाद्यैरकङ्कृतं ।

तत् पूर्वे शुद्धमाल्येन स्थण्डिकं मण्डलं न्यसेत् ॥ १६ ॥

तदूर्ध्वे स्थापयेद्धेमपात्रे नैर्ऋत्य पूरितं ।

क्षौमेणाच्छादनं कुर्यादन्तः कूर्चरलंकृतं ॥ १७ ॥

वेदीकोपरि शाल्येन कुर्यान्मण्डकं बुधः ।

पंचविंशत्पदं वाथ कल्पयेत् पीठमेव वा ॥ १८ ॥

दर्भैरास्तीर्य पश्चात्तु शुद्धतण्डुलरेखया ।

नाना पुष्पैश्च लाजैश्च प्रोक्षयेच्छोभनार्थकं ॥ १९ ॥

नवकुम्भे नवैर्वापि पंचविंशतिरेव वा ।

विधिवत् क्षालयेत् सर्वसूत्रैरावेष्टनं भवेत् ॥ २० ॥

शुद्धतोयेन संपूर्य वेदिकोपरि विन्यसेत् ।

मध्ये प्रधानकुम्भः स्यादन्ये क्रमात् समन्ततः ॥ २१ ॥

सर्ववस्त्रैश्च सम्वेष्टय सकूर्चाद्य प्रपल्लवान् ।

सविधानफलं चैवं पुष्पमाल्यैरलंकृतं ॥ २२ ॥

उपवेद्युपरि स्थाप्य चोक्तवच्चाष्टमंगकं ।

पश्चात् तु शिल्पिभिः प्राज्ञैः पाद प्रक्षालनं कुरु ॥ २३ ॥

विध्युक्त आचमनं कुर्यात् सकलीकरणं क्रमात् ।

पुण्याहं वाचयित्वा तु प्रोक्षयेत्प्रतिमादिकं ॥ २४ ॥

ब्राह्मादीनां च देवानां तत्तत् स्वनाम मन्त्रकैः ।

प्रणवादि नमोऽन्तेन क्रमाद् आराधयेत् पुनः ॥ २५ ॥

धूप दीपं ददेत् प्राज्ञो मध्यकुंभस्य मध्यमे ।

आराध्य गन्धपुष्पैश्च भुवानादिपतिं जपेत् ॥ २६ ॥

घृतगुलशस्यदधि क्षीरान्नं वा निवेदयेत् ।

धूपदीपं ददेत्तांबुलादि निवेदयेत् ॥ २७ ॥

दर्शयेत् धेनुमुद्रादीन् गीतादीन् नृत्तघोषणैः ।

तदग्रे स्थपतिः प्राज्ञो होमं कुर्यात्ततः क्रमात्॥ २८॥

समिदाज्यचरुं लाज प्रत्येकमष्टोत्तर शाताहुतिः।

शुद्धतोयेन सङ्ख्या पंचविंशतिरेव वा॥ २९॥

हृल्लेखं बीजं मुच्चार्य स्वाहान्तं प्रणवान्तकं।

बिम्बं गायत्रि मन्त्रेण पूर्णाहुतिं च कारयत्॥ ३०॥

अग्निकार्यावसाने तु विधिवद् बिम्बमाश्रयेत्।

पुण्याहं वाचयित्वा पूर्णाहुतिं च कारयेत्॥ ३१॥

रत्नशुद्धिं ततः कुर्याद् गन्धपुष्पैरवार्चयेत्।

स्थपतिः प्रोक्षयेद् बिम्बं सर्वमङ्गलघोषणैः॥ ३२॥

धूपदीपं दधेत् पश्चात् बिम्ब गायत्री मन्त्रतः।

आराध्यत गन्धपुष्पैश्च धेनुमुद्रां प्रदर्शयेत्॥ ३३॥

अक्षिरेखा समालिख्य सव्येऽक्षि कृष्णमण्डं।

ज्योतिर्मण्डकं ध्यात्वा सौरमन्त्रं समुच्चरेत्॥ ३५॥

पश्चात् तु वामनेत्रे तु शशि मन्त्रं समुच्चरेत्।

ललाटे लोचनं लेख्य अग्निबीजं समुच्चरेत्॥ ३६॥

पश्चात् तु स्वर्णलिप्येन पयसाज्येन लेपयेत्।

ततः प्रच्छाडनं कुर्याद्वत्सांगकनकैः सह॥ ३७॥

पायसं धनधान्यदिराशिं दर्शयेत् पुनः।

स्थपतिर्वरवेषाढ्यः प्राप्तपंचांगभूषणः॥ ३८॥

श्वेतानुलेपनं लिप्यं नववस्त्रोत्तरीयवान्।

स्वर्णयज्ञोवीतश्च शितपुष्पशिवा शुचिः॥ ३९॥

स्वमूर्तिसव्यं चास्ये व मूलकुम्भं तथोत्तरे।

अन्यकुम्भानि सर्वाणि धारयेत् परिचारकैः॥ ४०॥

छत्रचामरसंयुक्तं सर्वमङ्गलघोषणैः।

हर्म्यं प्रदक्षिणं कुर्यात् स्वाध्याय घोषणैः सह॥ ४१॥

तद्बिम्बं च समाश्रित्य सजलेनाभिषेचयेत्।

अन्येन सर्वकुम्भानां जलेनोपाङ्गादि पूजयेत्॥ ४२॥

एवं कुम्भान्परिक्षिप्य तत्तत् सूत्रं समुच्चरेत्।

नाना वस्त्रेण संयुक्तं नाना पुष्पैरलंकृतं॥ ४३॥

गन्धानुलेपनालिप्य सर्वाभरणभूषितं।

धूपदीपं ददेत् पश्चात् गीतादि घोषणैः॥ ४४॥

मूर्धादि प्राणपर्यन्तं मातृकाक्षरं न्यसेत्।

पादादि मूर्धपर्यन्तं पर्यायादि साक्षरं न्यसेत्॥ ४५॥

अष्टत्रिंशत् कलाः सर्वे तत्तदङ्गानि विन्यसेत्।

अङ्गपादैः करैर्वक्त्रं करणानि च विन्यसेत्॥ ४६॥

पश्चात् तु मूलमन्त्रेण समध्यान परायणं।

आराध्य गन्धपुष्पैश्च धूपदीपं दधेत्पुनः॥ ४७॥

पश्चात्तु ताम्बुलादीनि नैवेद्यानि निवेदयेत्।

ब्राह्मणैश्चाक्षतैः प्रोक्षय कुर्यात्तु स्वस्तिघोषणैः ॥४८ ॥

नृत्तीतादिमुद्रैश्च दर्शयेच्छिल्पि वित्तमः ।

नयनोन्मीलनं प्रोक्त्तं पश्चाद् ग्रामप्रदक्षिणं ॥ ४९ ॥

लक्षणोद्धारमेवोक्त्तवद् रेखया लिखेत् ।

प्रतिमां लोहजं प्रोक्त्तं तथा रत्नं तु विन्यसेत् ॥ ५० ॥

शिलालिङ्गं तु बिम्बानां यत्तत् कर्मावसानके ।

स्थापनात् पूर्वके रत्नं विन्यासं कारयेत् बुधः ॥ ५१ ॥

पीठं तस्य च मध्ये तु नवकोष्ठं प्रकल्पयेत् ।

पद्मरागं तु तन्मध्ये वज्रं च इन्द्रवत् न्यसेत् ॥ ५२ ॥

प्रवालं च अग्निकोष्ठं तु महानीलं यमे तथा ।

वैदूर्यं न्यसेन् नैर्ऋत्ये मरकतं पश्चिमे तथा ॥ ५३ ॥

वायव्ये पुष्परागं च मौक्त्तिकं तु कुबेरके ।

इन्द्रनीलं तु ईशाणं तु विन्यसेत् विधिवित्तमः ॥ ५४ ॥

स्थपतिः स्थापकश्चोभौ स्थापयेद् बिम्बलिङ्गकं ।

एवं तु रत्नविन्यासं शेषमङ्गं यथोक्त्तवत् ॥ ५५ ॥

हृदयकमलमध्ये दीपवत्तत्परं स्यात् ।

कलमजहरिहरादि देवानां च सर्वं ॥ ५६ ॥

विधिमिह सकलरूपं च चक्षुरुन्मीलनं च ।

कृतिमिति रखिलमुक्त्तं मानसारं पुराणैः ॥ ५७ ॥

पितामहेन्द्र प्रमुखैः समस्तैः देवैरिदं शास्त्रवरं पुरोदितं।

तस्मात्समुद्धृत्य हि मानसारं शास्त्रं कृतं लोकहितार्थमेतत्॥ ५८ ॥

## अथ रत्नपंचलोहौ विन्यास विधि पटलं ॥

**ऋषि मानसारोवाच** ॥

नवरत्नानि लोहैश्च तत्तन्मन्त्रेण चार्चयेत्।

त्रित्रिकोष्ठे तु तद्गर्भे तन्मध्ये स्वर्ण निविक्षिपेत्॥ १ ॥

इन्द्रे ताम्रं विनिक्षिप्य याम्ये निक्षिप्य चायसं।

पश्चिमेऽत्र प्रविप्रवालं न्यस्य चोत्तरे रजतं क्षिपेत्॥ २ ॥

स्थापनात् पूर्वके रत्नं विन्यासं कारयेत् बुधः ॥ ३ ॥

पीठं तस्य च मध्ये तु नवकोष्ठं प्रकल्पयेत्।

पद्मरागं तु तन्मध्ये वज्रं च इन्द्रवत् न्यसेत्॥ ४ ॥

प्रवालं च अग्निकोष्ठं तु महानीलं यमे तथा।

वैदूर्यं न्यसेन् नैऋत्ये मरकतं पश्चिमे तथा ॥ ५ ॥

वायव्ये पुष्परागं च मौक्तिकं तु कुबेरके।

इन्द्रनीलं तु ईशाणं तु विन्यसेत् विधिवित्तमः ॥ ६ ॥

रत्नशुद्धिं ततः कुर्याद् गन्धपुष्पैरवार्चयेत्।

स्थपतिः प्रोक्षयेद् बिम्बं सर्वमङ्गलघोषणैः ॥ ७ ॥

धूपदीपं दधेत् पश्चात् बिम्ब गायत्री मन्त्रतः।

आराध्यत गन्धपुष्पैश्च धेनुमुद्रां प्रदर्शयेत्॥ ८ ॥

## अथ अङ्कुरार्पण विधि पटलं ॥

अथ मध्ये चतुर्मुखं विन्द्यात्पुर्वे वज्रिणमेव च दक्षिणे तु यम विन्द्यात्पश्चिमे वरुणं तथा उत्तरे शशिनं विन्द्यात्पालिकास्थापनं क्रमात्॥ वाल्मीक मृत्तिकां हृत्वा गोमयं च तथैव च। एतानि प्रक्षियेत्तासु पालिकासु यथाक्रमं ॥

**ॐ भूः ब्रह्माणमावाहयामि ॥ ॐ भुवः प्रजापतिमावाहयामि ॥ ॐ स्वः चतुर्मुखमावाहमामि ॥**

**ॐ भूर्भुवस्स्वः हिरण्यगर्भमावाहयामि ॥ इति मध्ये ॥ १ ॥**

**ॐ भूः इन्द्रमावाहयामि ॥ ॐ भुवः वज्रिणमावाहयामि ॥ ॐ स्वः शचिपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः शतक्रतुमावाहयामि ॥ इति पूर्वे ॥ २ ॥**

**ॐ भूः यममावाहयामि ॥ ॐ भुवः वैवस्वतमावाहयामि ॥ ॐ स्वः पितृपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः धमराजमावाहयामि ॥ इति दक्षिणे ॥ ३ ॥**

**ॐ भूः प्रचेतसमावाहयामि ॥ ॐ भुवः सुरूपिणमावाहयामि ॥ ॐ स्वः अपांपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः वरुणमावाहयामि ॥ इति पश्चिमे ॥ ४ ॥**

**ॐ भूः शशिनमावाहयामि ॥ ॐ भुवः निशाकरमावाहयामि ॥ ॐ स्वः चन्द्रमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः सोममावाहयामि ॥ इति उत्तरे ॥ ५ ॥**

अथैतां स्नापयति आपो हिष्ठा इति तिसृभिः **पवमान सूक्तेन** इति गन्धपुष्पधूपदीपैरभ्यर्चयति अमुष्मै नमो अमुष्मै नमः इति ॥ **दिशाम्पतिं नमस्यामि सर्वकामफल प्रदान्। कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभं** ॥ ५॥ इति व्रीहि यव माष तिल मुद्ग सर्षपां मिश्रीकृत्य क्षीरेण प्रक्षाल्य **ओषधि सूक्तेन** ॥ पालिकस्मध्ये **ब्रह्म जज्ञानं प्रथमं** इति पुर्वे **इन्द्रा याहि** इति दक्षिणे **यमो नो गातुं** इति पश्चिमे **इमं मे-वरुणे** इति उत्तरे **सोमो धेनुं सोमो** इति याथक्रमं ॥

**अथ नयनोन्मोक्ष मन्त्र पटलं ॥**

**ऋषिः चक्षुः सूर्यः छन्दः गायत्रीः देवता चक्षुः ॥**

चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः।

चक्षुर्धाता दधातु नः॥ १॥

चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः।

सं चेदं वि च पश्येम॥ २॥

सुसंदृशं-त्वा वयं प्रति पश्येमं सूर्य।

वि पश्येम नृचक्षसः॥ ३॥

**ऋषिः प्रस्कण्वः काण्वः छन्दः गायत्रीः देवता सूर्यः दक्षिणाक्षुः॥**

उदु त्यं जातवेदसं देवं वहन्ति केतवः।

दृशे विश्वाय सूर्य॥ ॐ सौं सूर्याय नमः॥ ४॥

**ऋषिः गोतमः राहूगणः छन्दः गायत्रीः देवता चन्द्रः वामाक्षुः॥**

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं।

भवा वाजस्य संगथे॥ ॐ सों सोमाय नमः॥ ५॥

ऋषिः मेधातिथिः काण्वः छन्दः गायत्रीः देवता अग्निः मध्ये॥

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।

अस्य यज्ञस्य सुक्रतुं॥ ॐ अँ अग्नये नमः॥ ६॥

## अथ द्वार पूजा विधि पटलं॥

आदिब्रह्म कुले जातस्स्वः देवाचार्यः शुद्धवस्त्रोत्तरीयोन्वितः सुवर्णयज्ञोपवीत स्थितिं रत्नाभरणधर कर्णकुण्डल विभूषितं नित्यकर्मानुष्ठानं पूर्वकं महेन्द्रं प्रार्थयः श्री विश्वकर्मण पूजा पुरस्सरं सकळी कृत्वा बृहस्पतिस्थाने द्वारस्समीपे द्वारपूजा गत्वा॥

**अथ पूर्वद्वार पूजा॥ १॥**

ऋषिः मेधातिथिः काण्वः छन्द गायत्रीः देवता द्वारादेवीः॥

वि श्रय न्तामृतावृधो द्वारो देवीरसश्चतः।

अद्या नूनं च यष्टवे॥ १॥ ॐ द्वारादेव्यै नमः॥

**अथ दक्षिणद्वार पूजा॥ २॥**

ऋषिः जमदग्निः भार्गवः छन्दः त्रिष्टुप् देवता द्वारादेवीः॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः।

देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः॥ २॥

ॐ द्वारादेव्यै नमः॥

**अथ पश्चिमद्वार पूजा ॥ ३ ॥**

**ऋषिः गृत्समदः शुनकः छन्दः जगतीः देवता द्वारादेवीः ॥**

वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः ।

व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥ ३ ॥

ॐ द्वारादेव्यै नमः ॥

**अथ उत्तरद्वार पूजा ॥ ४ ॥**

**ऋषिः दीर्घतमः उचथ्यः छन्दः अनुष्टुप् देवता द्वारादेवीः ॥**

वि श्रयन्तामृतावधृः प्रयै देवेभ्यो महीः ।

पावकासः पुरुस्पृहो द्वारो देवीरसश्चतः ॥ ४ ॥

ॐ द्वारादेव्यै नमः ॥

## अथ विनायक कल्प पटलं ॥

**बोधायन ऋषिरुवाच ॥**

अथातो विनायककल्पं व्याख्यास्यामः मासिमासि चतुर्थ्यां शुक्लपक्षस्य पंचम्यां वाऽभ्युदयादौ सिद्धिकामः पशुकामः वा

भगवतो विनायकस्य बलिं हरेत् ॥ १ ॥

पूर्वेद्युः कृतैकभुक्तः शचिरप आचंयाथ देवयजनोल्लेखन प्रभृत्या अग्निमुखात् कृत्वा दक्षिणमुखं हस्तिमुखं दक्षिणो ब्राह्मण मुपवेश्योपोत्थाय दैवतमावाहयति ।

विघ्न विघ्नेश्वर इति ॥ इति ॥ २ ॥

अथ दूर्वा अक्षत सुमनो मिश्रमर्घ्यं ददाति। इमा आप इति॥ ३॥

अथ तूष्णीं वा गन्ध पुष्प दीपैरभ्यर्च्योपतिष्ठते।

भूपतये इति त्रेधा॥ ४॥

उपस्थाप तिस्रो विनायकाहुतीर्जुहोति।

विनायकाय भूपतये नमो विनायकाय स्वाहा। इति त्रेधा।

जय प्रभृति सिद्धमा धेनुवर प्रदानात्॥ ५॥

अपूपं करम्भमोदकं सक्तून् पायसमित्यथास्मा उपहरति।

ॐ विघ्नाय स्वाहा इति दशनामानि जुहुयात् इति॥ ६॥

अथ भूतेभ्यो बलिमुपहरेत्।

ये भूताः प्रचरन्ति दिवा बलिं उच्छन्तो वितुदस्य प्रेष्याः।

तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु॥

इति॥ ७॥

अथ पंचसूत्रं कंकणं हस्ते व्याहृतिभिः बध्नाति।

ॐ भूर्भुवस्स्वः॥

विनायक महाबाहो विघ्नेश भवदाज्ञया।

कामा मे साधिताः सर्वे इदं बध्नामि कंकणं॥

प्रदक्षिणं कृत्वा प्रणम्याभिवाद्य विनायकं विसर्जयति॥

कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर।

उत्तिष्ठ सगणः साधो याहि भद्रं प्रसीसतों॥

ॐ भूर्भुवस्सुवः तत् पुरुषाय विद्मे हस्तिमुखाय धीमहि ।

तन्नो गणपतिः प्रचोदयात् स्वाहा ॥

ऋषिः गृत्समदः भार्गवः शौनकः छन्दः जगतीः देवता गणपतिः ॥

गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमं ।

ज्येष्ठ राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् नूतिभिः सीद सादनं ॥

**विनायक नमस्कारः ॥**

विघ्न विघ्नेश्वरागच्छ विघ्नेत्येव नमस्कृत ।

अविघ्नाय भवान् सम्यक् स्दाऽस्माकं भव भ्रभो ॥

**विनायक आवाहनं ॥**

ॐ भूः भूपतिमावाहयामि ।

ॐ भुवः भुवनपतिमावाहयामि ।

ॐ स्वः भूतानाम्पतिमावाहयामि ।

ॐ भूर्भुवस्स्वः विनायकमावाहयामि ॥

**विनायाक अर्घ्यपाद्यादि ॥**

ॐ इमा आपश्शिवाः शिवतमाः शान्ताश्शान्ततमाः पूताः पूततमाः मेध्या मेध्यतमा जुष्टा जुष्टामा अमृता अमृतरसाः पाद्या अघर्या अर्हणीया अभिषेचनीया आचमनीया मार्जनीयाश्च प्रतिगृह्णातु भगवान् विनायको विनायकाय नमः ॥

**वैतिक नामार्चना ॥**

ॐ भूपतये नमः। ॐ भुवनपतये नमः। ॐ भूतानाम्पतये नमः।

ॐ विघ्नाय नमः। ॐ विनायकाय नमः। ॐ वीराय नमः।

ॐ शूराय नमः। ॐ उग्राय नमः। ॐ भीमाय नमः।

ॐ हस्तिमुखाय नमः। ॐ वरदाय नमः।

ॐ विघ्नपार्षदेभ्योन्नमः । ॐ विघ्नपार्षदीभ्योन्नमः।

ॐ गणपतये नमः॥

## अथ कर न्यासं॥

ॐ भुवनपतये अङ्गुष्ठाभ्यां नमः।

ॐ भुवनपतये तर्जनीभ्यां नमः।

ॐ भूतानाम्पतये मध्यमाभ्यां नमः।

ॐ विघ्नाय अनामिकाभ्यां नमः।

ॐ विनायकाय कनिष्ठकाभ्यां नमः।

ॐ वीराय करतलकर पृष्ठाभ्यां नमः॥

## अथ हृदयादि न्यासं॥

ॐ शूराय हृदाय नमः।

ॐ उग्राय शिरसे स्वाहा।

ॐ भीमाय शिखायै वषट्।

ॐ हस्तिमुखाय कवचाय हुम्।

ॐ वरदाय नेत्र त्रायय वौषट्।

ॐ गणपतये अस्त्राय फट्॥

ॐ भूर्भुवस्स्वरोमिति दिग्बन्धः ॥

## अथ मन्त्र विन्यासं ॥

ओं नमो भगवते विनायकाय इति विन्यसेत् ॥

ओंकारं मूर्ध्नि विन्यस्य नकारं नासिके तथा ।

मोकारं तु ललाटे वै भकारं मुखमध्यतः ॥

गकारं कण्ठदेशे तु वकारꣳ हृदये न्यसेत् ।

तेकारं दक्षिणहस्ते विकारं वामतो न्यसेत् ॥

नाकारं दक्षिणपादे यकारꣳ वामपादे न्यसेत् ।

काकारं नाभिमध्ये तु यकारं शिखा योस्तथा ॥

## अथ विनायक तर्पनं ॥

ॐ विघ्नं तर्पयामि । विनायकं तर्पयामि । वीरं तर्पयामि । शूरं तर्पयामि । गणपतिं तर्पयामि । वरदं तपरयामि । हस्तिमुखं तर्पयामि । विघ्नपार्षदांश्च तर्पयामि । विघ्नपार्षदीश्च तर्पयामि ॥

## अथ भूते बलि ॥

ऋषिः हिरण्यगर्भः प्रजापतिः छन्दः जगतीं देवता भूतपतिः ॥

ये भूताः प्रचरन्ति दिवानक्तं बलिं उच्छन्तो वितुदस्य प्रेष्याः ।

तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु ॥

अथ पंचसूत्रं कंकणं हस्ते व्याहृतिभिः बध्नाति ।

ॐ भूर्भुवस्स्वः ॥ विनायक महाबाहो विघ्नेश भवदाज्ञया ।

कामा मे साधिताः सर्वे इदं बध्नामि कंकणं ॥

प्रदक्षिणं कृत्वा प्रणम्याभिवाद्य विनायकं विसर्जयति ॥

कृतं यदि मया प्राप्तं श्रद्धया वा गणेश्वर ।

उत्तिष्ठ सगणः साधो याहि भद्रं प्रसीसतों ॥

ऋषिः गृत्समदः भार्गवः छन्दः जगतीः देवता गणपतिः ॥

गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमं ।

ज्येष्ठ राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् नूतिभिः सीद सादनं ॥

अथ चतुर्वेदे विनायक पारायण विधि पटलं ॥

अथ ऋग्वेदीय गजपति-सूक्तं ॥

ऋषिः कुसीदी काण्वः छन्दः गायत्रीः देवता गजपतिः ॥

आ तू न इन्द्रं क्षुमन्तं चित्रं ग्राभꣳसं गृभाय ।

महाहस्ती दक्षिणेन ॥ १ ॥

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघं ।

तुवि मात्रमवोभिः ॥ २ ॥

नहि त्वा शूर देवा न मर्तासो दित्सन्तं ।

भीमं न गां वारयन्ते ॥ ३ ॥

एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजं ।

न राधसा मर्धिषन्नः ॥ ४ ॥

प्र स्तोषदुप गासिष च्छ्रवत्साम गीयमानं।
अभि राधसा जुगुरत्॥ ५॥
आ नो भर दक्षिणेनाऽभि सव्येन प्र मृश।
इन्द्र मा नो वसोर्निर्भाक्॥ ६॥
उप क्रमस्वा भर धृषता धृष्णो जनानां।
अदाशूष्टरस्य वेदः॥ ७॥
इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः।
अस्माभिः सु तँ सनुहि॥ ८॥
सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः।
वशैश्च मक्षू जरन्ते॥ ९॥

## अथ यजुर्वेदीय गणपति मन्त्रः॥

**ऋषिः गृत्समदः भार्गवः शौनकः छन्दः जगतीः देवता गणपतिः॥**

गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमं।
ज्येष्ठ राजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् नूतिभिः सीद सादनं॥ १॥

**ऋषिः परमेष्ठीः प्रजापतिः छन्दः भुरिक्शक्बरीः देवता गणपतिः॥**

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो
गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः॥

## अथ सामवेदीय विनायक संहिता ॥

अदर्दः सुष्वणास आ तू न इति वर्गा मृज्यमानाः सुहस्त्या इति

प्रथमषष्ठे चैषा वैनायकी नाम संहितैतां प्रयुञ्जजन् विनायकं प्रीणाति ॥

ऋषिः गातुरात्रेयः छन्दः त्रिष्टप् देवता विनायकः ॥

१ २ ३ २ ३ १ २ ३ २र ३ १ २ ३ १ २ ३ १ १

अदर्दरुत् समसृजो वि खानि त्वमर्णवान् बद्बधानाꣳ अरम्णाः ।

३ १ २ ३ १ २ ३ २उ ३ २उ ३ २ ३ १ २ ३ २

महान्तमिन्द्र पवर्त वि यद्वः सृजद्धारा अव यद्दानवान्हन् ॥ १ ॥

ऋषिः पृथुवैन्यः छन्दः त्रिष्टप् देवता विनायकः ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २

सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तविनृम्ण वाजं ।

१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २

आ नो भर सुवितं यस्य कोना तना त्मना सहयामात्वोताः ॥ २ ॥

ऋषिः कुसीदः काण्वः छन्दः गायत्रीः३ देवता विनायकः ॥

१ २र ३ २ २ ३ २ ३ १ २र

आ तू न इन्द क्षुमन्तं चित्रं ग्राभꣳ सं गृभाय ।

३ १ २र

महाहस्ती दक्षिणेन ॥ ३ ॥

३ १ २र ३ २ ३ १ २ ३ १ २

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघं ।

३ १ २र

तुविमात्रमवोभिः ॥ ४ ॥

१ २र ३ १ २र ३ १ २

नहि त्वा शूर देवा न मर्तासो दित्सन्तं ।

३ २उ ३ १ २

भीमं न गां वारयन्ते ॥ ५ ॥

ऋषिः सप्तर्षयः छन्दः बृहतीः देवता विनायकः ॥

३ १ २ ३ १ २र

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।

३ २ ३ २ २ ३ १ २ ३ २ ३ १ २ ३क २र

रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ६ ॥

५ र २ १ २ ४ ५ २

मृज्यमानाः ॥ सुहस्तियाऽ३ । सामूऽ३द्राइवा । चमिन्वसाऽ३इ ।

१ २ ४ ५ २ १ ३ ५

रायीऽ३०पाइशा । गंबहुलाऽ३म् । पूरूऽ२स्पृऽ२३४हाम् ॥

१ २र १ २ २ १ ५ ४ ५

पवमा । ना । औऽ३हो ॥ भियोऽ२३४वा । पाऽ५सोऽ६हाइ ॥

६।१॥

५ र २ १ १ २र १उ१

मृज्यमानाः॥ सुहस्तायाऽ२। समुद्रेवा। चामिन्वासाऽ२३४इ॥

३१ ३ २ १ अ १

रयाऽईपिशा। गंबहुलंपूरुस्पृहाऽ२म्॥ पवाभर२३॥

१ ३ ५र र १नि र ३ १११

माऽ२नाऽ२३४औहोवा॥ भियाऽ२र्पसीऽ२३४५॥

## अथ अथर्ववेदीय विनायक-सूक्तं॥

ऋषिः द्रविणोदा अथर्वणः छन्दः बृहती १ जगती २ अनुष्टुप् देवता विनायकः॥

निर्लक्ष्म्यंऽ ल्लाम्यं १ निररातिं सुवामसि।

अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि॥ १॥

निररणिं सविता साविषक्पदोर्निर्हस्तयोर्वरुणो मित्रो अर्यमा।

निरस्मभ्यमनुमती रराणा प्रेमां देवा असाविषुः सौभगाय॥ २॥

यत्त आत्मनि तन्वांऽघोरमस्ति यद्वा केशेषु प्रतिचक्षणे वा।

सर्वं तद्वाचाप हन्मो वयं देवस्त्वा सविता सूदयतु॥ ३॥

रिश्यपदीं वृषदतीं गोषेधां विधमामुत।

विलीढ्यंऽ ललाम्यं १ ता अस्मन्नाशयामसि॥ ४॥

## अथ हस्तिमुख-सूक्तं ॥

ऋषिः वसिष्ठः छन्दः त्रिष्टुप् १ अनुष्टुप् २। ५-६ जगतीः ३-४ देवता हस्तिमुखः ॥

हस्तिवर्चसं प्रथतां बृहद्यशो अदित्या यत्तन्वः संबभूव ।

तत्सर्वे समदुर्मह्यमेतद्विश्वे देवा अदितिः सजोषाः ॥ १ ॥

मित्रश्च वरुणश्चेन्द्रो रुद्रश्च चेततु ।

देवासो विश्वाधायसस्ते माञ्जन्तु वर्चसा ॥ २ ॥

येन हस्ती वर्चसा संबभूव येन राजा मनुष्येष्वप्स्वश्न्तः ।

येन देवा देवतामग्र आयन्तेन मामद्य

वर्चसाग्ने वर्चस्विनं कृणु ॥ ३ ॥

यत्ते वर्चो जातवेदो बृहद्भवत्याहुतेः ।

यावत्सूर्यस्य वर्च आसुरस्य च हस्तिनः ।

तावन्मे अश्विना वर्च आ धत्तां पुष्करस्रजा ॥ ४ ॥

यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते ।

तावत् समैत्विन्द्रियं मयि तद्धस्तिवर्चसं ॥ ५ ॥

हस्ती मृगाणां सुषदामतिष्ठावान् बभूव हि ।

तस्य भगेन वर्चसाभिषिञ्चामि मामहं ॥ ६ ॥

ऋषिः अथवर्णः छन्दः बृहतीः विराट्ब्रह्मीः देवता गणपतिः ॥

गणपते गणपतिꣳ मा कृणु तस्मान्मा वयं ॥ १ ॥

अपिगणापि गणꣳमा कृणु तस्मान्मा छित्सि ॥ २ ॥

सगण सगणश्मा कृणु तस्मान्मा नसं ॥ ३ ॥

गणवर्धन गणं मे वर्धय ।

गवामश्वानां पुरुषाणां ब्रह्मचारिणां भूत्या अन्नाद्यस्य ॥ ४ ॥

गणाभिवर्धन गणं मे अभिवर्धयं ।

गवामश्वानां पुरुषाणां ब्रह्मचारिणां भूत्या अन्नाद्यस्य ॥ ५ ॥

गणप्रवर्धन गणं मे प्रवर्धय । गवामश्वानां पुरुषाणां

ब्रह्मचारिणां भूत्या अन्नाद्यस्य ॥ ६ ॥

**अथ महागणपति होमकल्पं ॥**

ॐ ऋद्धस्याम हव्यैर्नमसोपसद्य । मित्रं देवं मित्रधेयं नो अस्तु ।

अनूराधान् हविषा वर्धयन्तः । शतं जीवेम शरदः सवीराः ।

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजं ।

प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥

अगजानन पद्मार्कं गजाननमहर्निशं ।

अनेकदं तं भक्तानां एकदन्तं उपास्महे ॥

वक्रतुंड महाकाय कोटिसूर्यसमप्रभ ।

निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

ॐ ममोपात्त समस्त दुरितक्षयद्वारा श्री परमेश्वर प्रीत्यर्थम् श्री महागणपति प्रसाद सिद्धयर्थम् अद्य शुभदिने शुभमुहूर्ते श्री महागणपति होमकर्म यथाशक्तित करिष्ये ।

गंगे च यमुने चैव गोदावरि सरस्वति ।

नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ अमृतं भवतु ।

अदितेऽनुमन्यस्व । अनुमतेऽनुमन्यस्व ।

सरस्वतेऽनुमन्यस्व । देव सवितः प्रसुव ॥

अस्य श्री महा गणपति मंत्रस्य गणक ऋषिः निचृद्गायत्री छन्दः श्री महा गणपतिर्देवता ।

ग्लां बीजं । ग्लीं शक्तिः । ग्लूं कीलकं ।

ॐ गां अंगुष्ठाभ्यां नमः । गीं तर्जनीभ्यां नमः । गूं मध्यमाभ्यां नमः । गैं अनामिकाभ्यां नमः । गौं कनिष्ठिकाभ्यां नमः । गः करतल करपृष्ठाभ्यां नमः ।

गां हृदयाय नमः । गीं शिरसे स्वाहा । गूं शिखायै वषट् । गैं कवचाय हुं । गौं नेत्रत्रयाय वौषट् । गः अस्त्राय फट् ।

भुर्भुवस्सुवरोमिति दिग्बंधः ।

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं

ॐ हंसः सोऽहं सोऽहं हंसः महागणपतेः प्राण इह प्राणः ।

जीव इह स्थितः ।

सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्र जिह्वाघ्राण प्राणापानव्यानोदानसमानाः

इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा । सान्निध्यं कुर्वन्तु स्वाहा ।

असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो देहि भोगं ।

ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ।

आं ह्रीं क्रों क्रों ह्रीं आं । आं ह्रीं क्रों क्रों ह्रीं आं ।

आं ह्रीं क्रों क्रों ह्रीं आं। आं ह्रीं क्रों क्रों ह्रीं आं।

महागणपति प्राणशक्त्यै नमः। धूपं दीपं घृतमधु निवेदनं समर्पयामि। आवाहितो भव।

स्थापितो भव। सन्निहितो भव। सन्निरुद्धो भव। अवकुंठितो भव। देव प्रसीद प्रसीद।

देव सर्व जगन्नाथ यावद्धोमावसानकम्।

तावत्त्वं प्रीतिभावेन मूर्तौ अग्नौ च सन्निधिं कुरु।

ॐ श्रीं ह्रीं क्लीं श्री महागणपतये नमः। आसनादि समर्पयामि॥

ॐ श्रीं ह्रीं क्लीं महागणपतये पुष्पैः पूजयामि।

ॐ सुमुखाय नमः। ॐ एकदन्ताय नमः। ॐ कपिलाय नमः।

ॐ गजकर्णकाय नमः। ॐ लंबोदराय नमः। ॐ विकटाय नमः।

ॐ विघ्नराजाय नमः। ॐ धूमकेतवे नमः। ॐ गणाध्यक्षाय नमः।

ॐ फालचन्द्राय नमः। ॐ गजाननाय नमः। ॐ वक्रतुंडाय नमः।

ॐ शूर्पकर्णाय नमः। ॐ हेरंबाय नमः। ॐ स्कन्दपूर्वजाय नमः।

ॐ सिद्धिविनायकाय नमः। ॐ श्री महागणाधिपतये नमः।

ॐ स्वाहा। ॐ श्रीं स्वाहा। ॐ श्रीं ह्रीं स्वाहा। ॐ श्रीं ह्रीं क्लीं स्वाहा। ॐ श्रीं ह्रीं क्लीं ग्लौं स्वाहा। ॐ श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद स्वाहा।

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं स्वाहा।

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे

वशमानय स्वाहा स्वाहा। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा।

ॐ ब्रह्मार्पणं ब्रह्महविरखे ब्रह्माग्नौ ब्रह्मणा हुतं।

ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

ॐ पूर्णाहुतिं उत्तमां जुहोति सर्वं वै पूर्णाहुतिः।

सर्वमेवाप्नोति अतो इयं वै पूर्णाहुतिः।

अस्यामेव प्रतितिष्ठति।

ॐ श्रीं ह्रीं क्लीं महागणपतये पूर्णाहुतिं समर्पयामि।

## अथ महाभिषेक विधि पटलं॥

अथ मणिमुक्तादि नवरत्नश्च सुवर्णादि पंचलोहेषु निधाय पूर्णकलशेनाभिषंचति पंच पवमानं इति ऋचेन॥

ऋषिः असितः काश्यपः छन्दः गायत्रीः देवता तन्तुः॥

तन्तुं तन्वानमुत्तममनु प्रवत आशत। उतेदमुत्तमाय्यं॥ १॥

त्वं सोम पणिभ्य आ वसु गव्यानि धारयः।

ततं तन्तुमचिक्रदः॥ २॥

ऋषिः विश्वेदेवाः छन्दः जगतीः देवता पुण्याहपात्रं॥

त्वष्टा माया वेद्पसामपस्तमो बिभ्रत् पात्रा देवपानानि शंतमा ।
शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः ॥ ३ ॥

ऋषिः सिन्धुक्षिद् प्रियमेधः छन्दः जगतीः देवता नद्या ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ४ ॥

ऋषिः सुमित्रः वाध्रयश्वः छन्दः त्रिष्टुप् देवता रत्नलोहौ ॥

देव त्वष्टर्यद्ध चारुत्वमानड्यदङ्गिरसामभवः सचाभूः ।
स देवानां पाथ उप प्र विद्वाँ उशन्यक्षि द्रविणोद ः सुरत्नः ॥ ५ ॥

ऋषिः वामदेवः गौथूम च छन्दः गायत्रीः देवता नाळिकेरं ॥

कया नश्चित्र आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ६ ॥

ऋषिः आनन्दः कर्दमं चिक्लीतः छन्दः पङ्क्तिः देवता गन्धः ॥

गन्धद्वारां दुराधर्षां नित्य पुष्टां करीषिणीम् ।
ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ७ ॥

ऋषिः अग्निवेश्यः छन्दः सर्वछन्दांसिः देवता प्रजापतिः ॥

ॐ पुण्याहं वाचयिष्ये । ॐ वाच्यतां ॥ ८ ॥

ॐ आपः । ॐशिवा आपः सन्तु ॥ ९ ॥

ॐ गन्धाः । ॐ सुगन्धाः पान्तु ॥ १० ॥

ॐ सुमनसः । ॐ सौमनस्यमस्तु ॥ ११ ॥

ॐ शिवं कर्माः। ॐ आपः स्वस्ति शिवं कर्मा अस्तुः॥ १२॥

ॐ अन्वाहार्यः। ॐ सुमन्वाहार्योऽस्तु॥ १३॥

ॐ दक्षिणाः। ॐ स्वस्ति दक्षिणाः पान्तु बहु देयं अस्तु॥ १४॥

ॐ अक्षतं। ॐ अक्षतं चारिष्टं चास्तु॥ १५॥

ॐ मनः समाधीयतां। ॐ समाहित मनसः स्मः॥ १६॥

ॐ प्रसीदन्तु भवन्तु।

ॐ प्रसन्नाः स्मः पुण्याह काले वाच्यतां॥ १७॥

ॐ शान्तिरस्तु। पुष्टिरस्तु। तुष्टिरस्तु। ऋद्धिरस्तु।

वृद्धिरस्तु। अविघ्नमस्तु। आयुष्यमस्तु। आरेग्यमस्तु।

धन धान्य समृद्धिरस्तु। शिवं कर्मा अस्तु॥ १८॥

ॐ प्रजापतिः प्रीयतां। ॐ प्रीयतां भगवान् प्रजापतिः॥ १९॥

ॐ पुण्याहं भवन्तो ब्रुवन्तु। ॐ पुण्याहं॥ २०॥

ॐ स्वस्ति भवन्तु ब्रुवन्तु । ॐ स्वस्तिं॥ २१॥

ॐ ऋद्धिं भवन्तो ब्रुवन्तु। ॐ ऋद्ध्यतां॥ २२॥

ॐ पुण्याह समृद्धिः अस्तु॥ २३॥

ॐ शिवं कर्मा अस्तुः॥ २४॥

ॐ पितरः प्रीयन्तां। ॐ पितरः॥ २५॥

ॐ शान्तिश्शान्तिश्शान्तिः॥

अथ जयादि होम विधि॥

अथ मूले स्त्रुवं गृहीत्वा जपति ॥

**ऋषिः कौशिकः देवरातः छन्दः अनुष्टुप् देवता स्त्रुक्स्त्रुवौ ॥**

ॐ विष्णोर्हस्तोऽसि दक्षिणः पूष्ण दत्तो बृहस्पतेः ।

तं त्वाहं स्त्रुवमाददे देवानां हव्यवाहनं ॥

**ऋषिः शांखायनः कौषीतकिः छन्दः सर्वछन्दश्सिः देवता समृद्ध्यादि देवीः ॥**

ॐ इष्टेभ्यः स्वाहा। वषळनिष्टेभ्यः स्वाहा। भेषजाय स्वाहा। दुरिष्ट्यै स्वाहा। निष्कृत्यै स्वाहा। दौराध्यै स्वाहा। ऋद्ध्यै स्वाहा। समृद्ध्यै स्वाहा। देवीभ्यस्तनूभ्यः स्वाहा ॥ १ ॥

**ऋषिः वसिष्ठः वामदेवा वा छन्दः त्रिष्टुप् देवता शत्रूञ्जयः ॥**

इन्द्रः सूरः प्रथमो विश्वकर्मा मरुत्वाꣳ अस्तु गणवान् सुजातैः। मम स्नुषा श्वशुरस्य प्रविटौ सपत्ना वाचं मनस उपासतां ॥ २ ॥

इन्द्रः सूरो अतरद्रजाꣳसि स्नुषा सपत्नाः श्वशुरीऽहमस्मि ।

अहं शत्रून्जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ ॥ ३ ॥

**ऋषिः जयेन्द्रः सुयज्ञर्वा छन्दः जगतीः देवता जयेन्द्रः ॥**

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै ।

तयाऽनन्तं लोकमहं जयानि प्रजापतिर्यꣳ प्रथमो जिगाय ॥ ४ ॥

**ऋषिः सुयज्ञः शांखायनः छन्दः शक्वरीः देवता मन्त्रलिङ्गोक्तः ॥**

अग्ने पृथिव्या अधिपते। ५। वायो अन्तरिक्षस्याधिपते। ६। सवितः प्रसवानामधिपते। ७। सूर्यो नक्षत्राणामधिपते। ८। सोमौषधीनामधिपते। ९। त्वष्टः समिधां

रूपाणामधिपते। १०। मित्र सत्यानाधिपते। ११। वरुण धर्माणाधिपते। १२। इन्द्रो ज्येष्ठानामधिपते। १३। प्रजापते प्रजानामधिपते॥ १४॥

विश्वेदेवा विश्वेवैश्वानरा विश्वेविश्वमहस इह मावतास्मिन् ।

ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्या माशिष्यास्यां प्रतिष्ठायामस्यां देवहूत्यामयं मे कामः समृध्यतां स्वाहा॥

**ऋषिः तार्क्ष्यः सुपर्णः छन्दः विराट् देवता सुहस्तपतिः॥**

सौधन्वनासस्सुहस्तां शमीभिस्त्वष्टमाङ्गिरसमृभवं स्वस्तये॥ १५॥

**ऋषिः सुयज्ञः शांखायनः छन्दः विराट् देवता आपः॥ संप्रोक्षणं**

ॐ शग्मं शग्मं शिवं शिवं क्षेमाय वः शान्त्यै

प्रपद्ये अभयं नो अस्तु॥ १६॥

**ऋषिः त्वष्ट्रा त्रिशिरः सिन्धुद्वीपर्वा छन्दः गायत्रीः देवता आपः॥**

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन।

महे रणाय चक्षसे॥ १॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः।

उशतीरिव मातरः॥ २॥

तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ।

आपो जनयथा च नः॥ ३॥

**ऋषिः मधुच्छन्दः छन्दः गायत्रीः देवता सोमपवमानः॥**

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।

इन्द्राय पातवे सुतः॥ १॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहतम्।

द्रुणा सधस्थमासदत्॥ २॥

वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः।

पर्षि राधो मघोनाम्॥ ३॥

अभ्यर्ष महानां देवानां वीतिमन्धसा।

अभि वाजमुत श्रवः॥ ४॥

त्वामच्छा चरामसि तदिदर्थं दिवे दिवे।

इन्दो त्वे न आशसः॥ ५॥

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता।

वारेण शश्वता तना॥ ६॥

तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश।

स्वसारः पार्ये दिवि॥ ७॥

तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम्।

त्रिधातु वारणं मधु॥ ८॥

अभी ३ ममघ्न्या उत श्रीणन्ति धेनवः शिशुम्।

सोममिन्द्राय पातवे॥ ९॥

अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते।

शूरो मघा च मंतहे ॥ १० ॥

ऋषिः असितः छन्दः गायत्रीः देवता आप्रिपवमानः ॥

समिद्धो विश्वतस्पतिः पवमानो वि राजति ।

प्रीणन्वृषा कनिक्रदत् ॥ १ ॥

तनूनपात्पवमानः शृङ्गे शिशानो अर्षति ।

अन्तरिक्षणे रारजत् ॥ २ ॥

ईळेन्यः पवमानो रयिर्वि राजति द्युमान् ।

मधोर्धाराभि रोजसा ॥ ३ ॥

बर्हिः प्राचीनमोजसा पवमान स्तृणन्हरिः ।

देवेषु देव ईयते ॥ ४ ॥

उदातै र्जिहते बृहद् द्वारो देवीर्हिरण्ययीः ।

पवमानेन सुष्टुताः ॥ ५ ॥

सुशिल्पे बृहती मही पवमानो वृषण्यति ।

नक्तोषासा न दर्शते ॥ ६ ॥

उभा देवा नृचक्षसा होतारा दैव्या हुवे ।

पवमान इन्द्रो वृषा ॥ ७ ॥

भारती पवमानस्य सरस्वतीळा मही ।

इमं नो यज्ञमा गमन्तिस्रो देवीः सुपेशसः ॥ ८ ॥

त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे ।

इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥ ९ ॥

वनस्पतिं पवमान मध्वा समङ्ग्धि धारया ।

सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥ १० ॥

विश्वेदेवाः स्वाहा कृतिं पवमानस्या गत ।

वायु बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसः ॥ ११ ॥

**ऋषिः विश्वामित्रः देवता आर्भवपवमानः ॥**

ऋभवो देवाः सोमस्य मत्सन् ।

विष्ट्वी स्वपसः । कर्मणा सुहस्ताः ॥ १ ॥

धान्या धनिष्ठा । शम्या शमिष्ठाः ।

शच्या शचिष्ठाः ॥ २ ॥

ये धेनुं विश्वजुवं विश्वरू-पामतक्षन् ।

अवक्षन् धेनुमभवद् विश्वरू-पी ॥ ३ ॥

अबुध्रन्त्सं कनीना मदन्तः ।

अयुंजत हती अयुर्देवाँ उप ॥ ४ ॥

संवत्सरे स्वपसो यज्ञियं भागमायन् ।

ऋभवो देवा इह श्रवन् इह सोमस्य मत्सन् ॥ ५ ॥

प्रेमां देवा देवहूतिमवन्तु देव्या धिया ।

प्रेदं ब्रह्म प्रेदं क्षत्रं ।

प्रेमं सुन्वन्तं यजमानमवन्तु ॥ ६ ॥

चित्राश्चित्राभिरूतिभिः ।

श्रवन् ब्रह्माण्यावसा गमन्॥ ७ ॥

ऋषिः पवित्रः आङ्गिरसः छन्दः अनुष्टुप् देवता पवित्रपवमानः ॥

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।

ऋषिभिः सं भृतो रसो ब्राह्मणेष्वमृतं हितं ॥ १ ॥

पावमानीर्दिशन्तु न इमं लोकमथो अमुं ।

कामान् समर्धयन्तु नो देवीर्देवैः समाहिताः ॥ २ ॥

येन देवाः पवित्रे-णात्मानं-पुनते सदा ।

तेन सहस्र धारेण पावमान्यः पुनन्तु मां ॥ ३ ॥

प्रजापत्यं पवित्रं- शतोद्यामं हिरण्मयम् ।

तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ ४ ॥

इन्द्रः पुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मा जातवे-दा मूर्जयन्त्य पुनातु॥ ५॥ पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नान्दनं ।

पुण्यांश्च भक्षान् भक्षयत्यऽमृतत्वं च गच्छति ॥ ६ ॥

ऋषिः विश्वामित्रः गाथिनः छन्दः उष्णीक् देवता महापवमानः ॥

श्येनोऽसि पत्वा गायत्रच्छन्दा अनु त्वा रभे ।

स्वस्ति मा सं पारययास्य यज्ञस्योदृचं ॥ १ ॥

सुपर्णोऽसि पत्वा त्रिष्टुप् छन्दा अनु त्वा रभे ।

स्वस्ति मा सं पारययास्य यज्ञस्योदृचं ॥ २ ॥

सखाऽसि पत्वा जगच्छन्दा अनु त्वा रभे ।

स्वस्ति मा सं पारययास्य यज्ञस्योदृचं ॥ ३ ॥

ॐ असतो मा सद्गमय । तमसो मा ज्योति र्गमय ।

अन्तान्मानन्तं गमय । मृत्यो र्मा अमृतं गमय ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥

### अथ पञ्चकव्य विधि पटलं ॥

**ऋषि विश्वकर्मा उवाच ॥**

**अथ शुचौ देशे समवस्थाप्य गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयं आप्यायस्वेति क्षीरं दधिक्राव्णेति वै दधि घृतं मिमीक्षे इति आज्यं देवस्य त्वा सवितु कुशोदकं** इत्येतत्पंचगव्यं नाम ॥ जलसंप्रोक्षणं कुर्यात् पुण्याहं वाचयेत्ततः। पंचगव्येन संप्रोक्षय स्थपतिः स्थापकैः सह ॥

**ऋषिः विश्वमित्रः गाथिनः छन्दः गायत्रीः देवता गोजलं ॥**

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।

धियो यो नः प्रचोदयात् ॥ १ ॥

**ऋषिः आनन्दः कर्दमं चिक्लीतः छन्दः पङ्क्तिः देवता गोमयः ॥**

गन्धद्वारां दुराधर्षां नित्य पुष्टां करीषिणीम् ।

ईश्वरीँ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ २ ॥

**ऋषिः वामदेवः गौतमः छन्दः अनुष्टुप् देवता दधिः ॥**

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳसि तारिषत् ॥ ३ ॥

**ऋषिः गोतमः राहूगणः छन्दः गायत्रीः देवता क्षीरः ॥**

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं ।
भवा वाजस्य संगथे ॥ ४ ॥

**ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् देवता गोघृतः ॥**

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतं वस्य धाम ।
अनुष्वधमावह मादयस्व स्वहाकृतँ वृषभ वक्षि हव्यम् ॥ ५ ॥

**ऋषिः वामदेवः गौतमः छन्दः उष्णिक् देवता कुशोदकः ॥**

देवस्य त्वा सवितुः प्रसवेनश्विनों बाहुभ्यां पूष्णो हस्ताभ्यां ॥ ६ ॥

**अथ पंचब्रह्म मन्त्र पटलं ॥**

**ऋषिः जमदग्निः भार्गवः छन्दः त्रिष्टुप् देवता सद्योजातः ॥ १ ॥**

सद्योजातो व्यमितीत यज्ञं अग्निर्देवा नामभवत् पुरोगाः ।
अस्यहोतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳहविरदन्तु देवाः ॥

**ऋषिः भरद्वाजः बृहस्पतिः छन्दः त्रिष्टुप् देवता वामदेवः ॥ २ ॥**

वाममद्य सवितर्वाममु श्वो दिवो दिवो वाममस्यमभ्य-ꣳसावीः ।
वामस्य हि क्षयस्य देव भूरे-रया धिया वाम भाजः स्याम ॥

**ऋषिः अघोरः अथर्वणः छन्दः त्रिष्टुप् देवता अघोरः ॥ ३ ॥**

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।

सर्वेभ्यस्सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः गायत्रीः देवता तत्पुरुषः ॥ ४ ॥**

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।

तन्नो दन्तिः प्रचोदयात् ॥

**ऋषिः गोतमः राहूगणः छन्दः जगतीः देवता ईशानः ॥ ५ ॥**

तमीशानां जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयं ।

पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥

**अथ पंचामृत मन्त्र पटलं ॥**

**ऋषि बोधायनोवाच ॥**

नाळिकेर अम्र पनस कदळीनां फल त्रयं ।

शर्करा मधु घृतं संयुक्तं पंचामृतमिति स्मृतं ॥

सर्व पाप्मानं तरति तरति ब्रह्महत्यां

ब्रह्मणस्सायुज्यं सलोकतामाप्नोति ॥

**ऋषिः वामदेवः गौतमः छन्दः गायत्रीः देवता नाळिकेरं ॥**

कया नश्चित्र आभुवदूती सदावृधः सखा ।

कया शचिष्ठया वृता ॥ १ ॥

**ऋषिः अथर्वण भिषग छन्दः अनुष्टुप् देवता फलं ॥**

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।

बृहस्पति प्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ २ ॥

**ऋषिः त्वष्ट्रा त्रिशिरः सिन्धुद्वीपर्वा छन्दः गायत्रीः देवता शर्करा ॥**

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।

महे रणाय चक्षसे ॥ ३ ॥

**ऋषिः गौतमः राहूगणः छन्दः गायत्रीः देवता मधुः ॥**

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ ४ ॥

**ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् देवता गोघृतं ॥**

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतं वस्य धाम ।

अनुष्वधमावह मादयस्व स्वहाकृतꣳ वृषभ वक्षि हव्यम् ॥ ५ ॥

## अथ विशेषार्घ्यपाद्यादि पटलं ॥

**ऋषि शांखायनोवाच ॥**

अथ कूर्चः पाद्यं अर्घ्यं आचमनं मधुपर्कौ गौरि इति

वेदयेत वेदयेत नाना पात्राणि सादयित्वा ॥

**अथ कूर्च ददाति ॥ १ ॥**

**ऋषिः सुयज्ञः छन्दः अनुष्टुप् देवता कूर्चः ॥**

ॐ अहं वर्ष्म सादृशानां विद्युतामिव सूर्यः ।

इदं तमधि तिष्ठामि यो अस्माꣳअभि दासति ॥ १ ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ पाद्यपात्रं ॥ २ ॥**

**ऋषि बोधायनोवाच ॥**

अथ दूर्वा विष्णुक्रान्त श्यामाक पद्मपत्र कलशेन पाद्यं ददाति ।

**ऋषिः सुयज्ञः छन्दः एकपदविराट् देवता गोक्षीरः पाद्यपात्रं ॥**

ॐ विराजो दोहोऽसि विराजो दोह मशीय मयि

पद्यायै विराजो दोह ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ आचमनीयपात्रं ॥ ३ ॥**

अथ एला लवङ्ग तक्वोल कर्पूर मिश्र कलशेन आचमनीयं ददाति ।

**ऋषिः सुयज्ञः छन्दः विराट् देवता आपः आचमनीयपात्रं ॥**

ॐ आपो नाम स्थ शिवा नाम स्थोर्जा नाम स्थाजरा नाम स्थाभया

नाम स्थामृता नाम स्थ तासां वोऽशीय सुमतौ मा धत्त स्वाहा ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ अर्घ्य पात्रे ॥ ४ ॥**

अथ आपः क्षीर कुशाग्रैशच अक्षतै र्यव तण्डुलैस् तिलैस् सिद्धार्थकैश्च अर्घ्यं ददाति ।

**ऋषिः सुयज्ञः छन्दः अतिशक्वरी देवता आपः अर्घ्यपात्रं ॥**

ॐ इमा आपश्शान्ताश्श शिवाश्श शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृतां अमृतरसाः अर्घ्यास्ता जुषन्तां ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये  नमः ॥

**अथ मधुपर्क पात्रं ॥ ५ ॥**

**छधि च मधु च ब्राह्मो मधुपर्कः ॥**

**ऋषिः गौतमः राहूगणः छन्दः गायत्रीः देवता मधुः मधुपात्रं ॥**

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ ५ ॥

मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः ।

मधु द्यौरस्तु नः पिता ॥ ६ ॥

मधुमान्नो वनस्पति र्मधुमाँ असतु सूर्यः ।

माध्वीर्गावो भवन्तु नः ॥ ७ ॥

**ऋषिः वामदेवः गौतमः छन्दः अनुष्टुप् छेवता दधिः ॥**

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

सुरभि नो मुखा करत् प्रण आयूꣳषि तारिषत् ॥ ८ ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये  नमः ॥

## अथ उपसार पूजा विधि पटलं ॥

**अथ वासो ददाति ॥ १ ॥**

**ऋषिः दीर्घतमः औचथ्यः छन्दः त्रिष्टुप् छेवता वस्त्रं ॥**

युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।

अवातिरतमनृतानि विश्वा ऋतेन मित्रावरुणा सचेथे ॥ १ ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ यज्ञोपवीतं ददाति ॥ २ ॥**

**ऋषिः सुयज्ञः शांखायनः छन्दः विराट् देवता यज्ञोपवीतं ॥**

ॐ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यां ॥ २ ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ दक्षिणं ददाति ॥ ३ ॥**

**ऋषिका दक्षिणा प्रजापत्याः छन्दः त्रिष्टुप् देवता दक्षिणाः ॥**

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् ।

दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥ ३ ॥

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ गन्धं ददाति ॥ ४ ॥**

इमे गन्धाश्शुभा दिव्यास्सर्वगन्धैरलंकृताः ।

पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ माल्यं ददाति ॥ ५ ॥**

इमे माल्याश्शुभा दिव्यास्सर्वमाल्यैरलंकृताः ।

पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ पुष्पं ददाति ॥ ६ ॥**

इमे पुष्पााश्शुभा दिव्यास्सर्वपुष्पैरलंकृताः ।

पूता ब्रह्मपवित्रेण पूतास्सूर्यस्य रश्मिभिः ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ धूपं ददाति ॥ ७ ॥**

वनस्पतिरसो धूपो धूपेभ्यो धूप उत्तमः ।

आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यतां ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ दीपं ददाति ॥ ८ ॥**

ज्योतिश्शुक्रश्च तेजश्च देवानां सततं प्रियः ।

भास्वरस्सर्वभूतानां दीपोऽयं प्रतिगृह्यतां ।

प्रतिगृह्यतां प्रतिगृह्णातु भगवान्महागणपतये नमः ॥

**अथ नैवेद्यं ददामि ॥ ९ ॥**

**ऋषिः विश्वकर्मा मानवर्वा छन्दः त्रिष्टुप् छेवता अन्नपतिः ॥**

अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः ।

प्रप्र दातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे विश्वकर्मणे स्वाहा ॥

## अथ पंचशान्तिः ॥

ऋषिः सुयज्ञः शांखायनः छन्दः अनुष्टुप् गायत्रीः देवता शान्तिः ॥

ॐ तत्सवितुर्वृणीमहे वयं देवस्य भोजनं ।

श्रेष्टं सर्व धातमं तुरं भगस्य धीमहि ॥ १ ॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।

धियो यो नः प्रचोदयाद् ॥ २ ॥

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः ।

दीक्षे मा मा हिंसीः ॥ ३ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ऋषिः शंयुः भरद्वाजः छन्दः शक्वरीः देवता शान्तिः ॥

ॐ तच्छं योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये

दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः ऊर्ध्वं जिगातु भेषजं

शं नो अस्तु द्विपदेशं चतुष्पदे ॥ ४ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ऋषिः वामदेवः गोतमः छन्दः त्रिष्टुप् देवता शान्तिः ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो

वाचस्पतये नमो विष्णवे महते करोति ॥ ५ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ऋषिः वसिष्ठः मित्रावारुणिः छन्दः त्रिष्टुप् देवता शान्तिः ॥

ॐ शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यऽभयन्नो अस्तु ।

शिवा दिशाः प्रदिश उद्दिशोन आपो विश्वतः परिपान्तु सर्वतः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ऋषिः सुयज्ञः शांखायनः  छन्दः शक्वरीं गायत्रीः देवता शान्तिः ॥ ॐ ऋतं वदिष्यामि ।

सत्यं वदिष्यामि । तन्मामवतु ।

तद्वक्तारमवतुमां । अवतु वक्तारं ॥

मयि भर्गो मयि महः । वाक् मे मनसि प्रतिष्ठता ।

मनो मे वाचि प्रतिष्ठां । आविराविर्मययाभूः ।

वेदस्य म आणीः । ऋत मा मा हिँसी ॥

अनेनाधीते नाहोरात्रान् त्संवसामि । अग्ने इळ नम इळ नमः । ऋषिभ्यो मन्त्रकृद्भ्यो

मन्त्रपतिभ्यो नमोऽस्तु देवेभ्यः ॥

शिवा नः शन्तमा भव समृडीका सरस्वति ।

मा ते व्योम संदृशि ॥

अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः ।

दीक्षे मा मा हिँसीः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ११ ॥

## अथ त्वष्ट्रा कृत गणेश महिमा पटलं ॥

**मुद्गल ऋषि उवाच ।**

अन्यत् त्वं शृणु माहात्म्यं दूर्वायाः स्वसुखप्रदं ।

यया तृप्तिसमायुक्तो बभूव द्विरदाननः ॥ १ ॥

एकदा नारदो योगी जगाम जनकालयं ।

पूजितो जनकं सोऽभि जगाद हर्षसंयुतः ॥२ ॥

**नारद ऋषि उवाच ।**

धन्यस्त्वं गणनेथसय भक्तः परमभाविकः ।

मनोप्सितं गणाध्यक्षो ददते ते नियंत्रितः ॥ ३ ॥

नारदस्य वचः श्रुत्वा तं प्रहस्य महामुनिं ।

जगाद जनको वाक्यं योगयुक्तं स योगवित् ॥ ४ ॥

**जनक उवाच ।**

याज्ञवल्क्येन योगश्च कथितो मे शुभप्रदः ।

पूर्णाशान्ति प्रदो विप्र गणेशो नात्र संशयः ॥ ५ ॥

एकाक्षरं गणेशस्य ददौ मन्त्रं सुसिद्धिदं ।

महद्यं स कृपया योगिन् साधनं प्रजगाम ह ॥ ६ ॥

त्था मया महायोगिन् साधितं ज्ञानमुत्तमं ।

गणेशकृपयाऽहं तु योगी जातो गुरुर्यथा ॥ ७ ॥

अतोऽहं गणनाथश्च न भिन्नौ मुनिसत्तम ।

गणेशस्य कृत्र वर्तते दुदायिनी ॥ ८ ॥

मया यच्चिंतितं तत् तत् कथं ददाति विघ्नपः ।

अयोगिनामिदं सर्वं भ्रांतिदं भवतीत्यहो ॥ ९ ॥

पंचधा चित्तवृत्तिश्च तासां प्रकाशकारकः ।

चिन्तामणिः स्वयं साक्षात् खेलति हृदि संस्थितः ॥ १० ॥

जनकः कुत्र योगीन्द्र वर्तते वद सांप्रतं ।

तस्योपति गणेशस्य कृपादिकमिदं मुने ॥ ११ ॥

अहं हर्ता अहं कर्ताऽहं पाता च मदात्मनां ।

भ्रान्तवद् भाषणं योग्यं नैव ते योगिसत्तम ॥ १२ ॥

जनकस्य वचः श्रुत्वा नारदः क्रोधसंयुतः ।

उवाच तः महाभागं निर्भर्त्स्य जनकं पुनः ॥ १३ ॥

**नारद ऋषि उवाच ।**

ज्ञानमत्तोऽसि राजेन्द्र नरवरस्त्वं कथं भवेः ।

गणेशाकार रूपश्च देहेन भ्रमधारकः ॥ १४ ॥

ब्रह्मणस्पतिनामा वै गणेशो वेदवादतः ।

शरीरे तस्य सा सत्ता वर्तते पूर्णभावतः ॥ १५ ॥

योगिदेहेन सा सत्ता कदापि नृप वर्तते ।

समाधिना च योगीन्द्रो गणेशः कथितो बुधैः ॥ १६ ॥

प्रारब्धदेहधारित्वान्नरो योगी न संशयः ।

नरतुल्या शरीरेस्य भवेत् सत्ता हि सर्वहा ॥ १७ ॥

गर्विष्ठो योगमाहात्म्याज्जनक त्वां विशेतः ।

भविता गर्वभंगस्ते गजानन प्रसादतः ॥ १८ ॥

एवमुक्त्वा नृपं योगी कैलासे गणपं ययौ ।

तं प्रणम्य विनीतः स वृत्तांतं प्रजगाद ह ॥ १९ ॥

पुनः प्रणम्य विघ्नेशं ययौ स्वेच्छाचरो मुनिः ।

नारदो गणनेथसय गानासक्तो महामतिः ॥ २० ॥

ततो गजाननो भूतं वृद्ध ब्राह्मणरूपधृक् ।

आययौ जनकं कुष्ठी कृमिभाराकुलः पतन् ॥ २१ ॥

कंपेन संयुतः सोऽपि दुर्गंधेन समावृतः ।

पूयशोणितघर्मौघैर्व्याप्तश्च मक्षिकावृतः ॥ २२ ॥

द्वारपालेन राज्ञश्चाज्ञया तत्र प्रवेशितः ।

ययाचे तं नृपं विप्रो भोजनं तोषकारकं ॥ २३ ॥

राज्ञा संपूजितो विप्रो बुभुजेऽन्नं समागतं ।

अननं पुनर्ययाचे तं पुष्कलं प्रददौ नृपः ॥ २४ ॥

तदेव तेन संभुक्तं पुना राजा भयाकुलः ।

अयुतानां समं तस्मै ददावन्नं सुतुष्टिदं ॥ २५ ॥

भक्षयित्वा तदपि स ययाचेऽन्नं महामुनिः ।

त्तोऽपक्वं ददौ तद् बभक्ष द्विजोत्तमः ॥ २६ ॥

ततो राजा पुरे संस्थं भूमिस्थं प्रददौ पुनः ।

अननं बभक्ष तत्सोऽपि ययाचे तं धरापतिं ॥ २७ ॥

पुरप्रांते स्थिता ग्रामास्तेभ्यो राज्ञा समाहृतं ।

अन्नं दत्तं च विप्रेण भक्षितं सकलं प्रभो ॥ २८ ॥

ययाचे स विप्रो देहयन्नं राजसत्तम ।

राज्ञा लज्जासामायुक्तो न किंचित्तमुवाच ह ॥ २९ ॥

राजानं मुनिवर्यश्च जगाद प्रहसन्निव ।

त्वं गणेशो न संदेहः कथं सत्ताविवर्जितः ॥ ३० ॥

अकर्तुं कर्तुमद्यैवान्यथा कर्तुं गजाननः ।

समर्थस्त्वं कथं राजंस्तूष्णीं तिष्ठसि तद् वद ॥ ३१ ॥

भ्रांतो योगमदेनासि राजेन्द्रात्र न संशयः ।

प्रत्यक्षं नरतुल्योऽसि न गणेशो मतः कदा ॥ ३२ ॥

एवमुक्त्वा गणेशानो ब्राह्मणस्य स्वरूपधृक् ।

बहिर्निः सृत्य लोकान् स ययाचेऽन्नं क्षुधातुरः ॥ ३३ ॥

लेकाः सर्वे समूचुस्तं सर्वेषां गृहगं मुने ।

राज्ञा समाहृतं चान्नं त्वया सर्व प्रभक्षितं ॥ ३४ ॥

नास्मद्गेहेऽधुना किंचिदन्नं त्वं गच्छ वाडव।

सर्वभक्षः कुतो यातः कोऽसि न ज्ञायते जनैः॥ ३५॥

श्रुत्वा सोऽपि हसन् विप्रो बभ्राम यत्र तत्र तु।

पुरप्रांते गतो दैवाद् ददर्शद् वाडवालयं॥ ३६॥

विश्वकर्मा सुरस्तस्या जातः शिल्पि प्रजापतिः।

त्वष्टा विराजो रूपाणि धर्मपौत्र उदारधीः॥ ३७॥

कर्त्ता शिल्पिसहस्राणां त्रिदशानां तु योगतः।

यः सर्वेषां विमानानि देवतानां चकार हः॥ ३८॥

मानुषाश्चोपजीवंति यसय शिल्पं महात्मनः।

प्रह्लादी विश्रुता तस्य पत्नी त्वष्टुर्विरोचना॥ ३९॥

विरोचनस्य भगिनी माता त्रिशिरसस्तथा।

देवाचार्यस्य महतो विश्वरूपस्य धीमतः॥ ४०॥

विश्वकर्मात्मजश्चैव विश्वकर्मा मयः स्मृतः।

वर्धकिं विश्वकर्माणं सुराणां शिल्पकोविदं॥ ४१॥

त्रिशिरा मुनिवर्यश्चायाचिता वृत्तिधारकः।

गाणापत्याग्रणीः पत्न्या स विरोचनया युतः॥ ४१॥

तं ददर्श गणेशानः प्रविवेश तदाश्रमं।

सर्वापकारसंयुक्तं धातुधान्यादिवर्जितं॥ ४२॥

य्याचे तं महाभागमन्नं तृप्तिकरं मुने।

दीयतां मे क्षुधार्ताय गाणपत्यस्वरूधृक् ॥ ४३ ॥

जगाद त्रिशिरास्तत्र ब्राह्मणं वाक्यमुत्तमं ।

मद्गृहे नैव विप्रेन्द्र धान्यं किंचित् प्रवर्तते ॥ ४४ ॥

छरिद्राणां महाराजोऽहमेको नात्र संशयः ।

मत्समो मानवो युक्तो दारिद्र्येण न तिष्ठति ॥ ४५ ॥

दूर्वांकुराः समानीता गणेशपूजनाय च ।

तेष्वेको विद्यते विप्र नान्यत् किंचिद् विचारय ॥ ४६ ॥

तस्य तद् वचनं श्रुत्वा जगाद क्षुधितो द्विजः ।

भक्त्या देहि महाभाग दूर्वांकुरं क्षुधापहं ॥ ४७ ॥

ततो विरोचना विप्रं ददौ नत्वा गजाननं ।

ध्यात्वा दूर्वांकुरं तस्मै नानान्नं कल्प्य तत्रा सा ॥ ४८ ॥

भक्त्या दत्तं तया विप्रो बभक्ष प्रीतिसंयुतः ।

तेन दूर्वांकुरेणैव संतृप्तोऽभून् महामते ॥ ४९ ॥

भक्त्या तुष्टो ददौ विप्रं दर्शनं गणनायकः ।

गजवक्त्रादिचिह्नैश्च युतं रूपं परात्परं ॥ ५० ॥

दृष्ट्वा लम्बोदरं तौ प्रणेमतुः पुनः पुनः ।

तं साश्रुनयनौ पूज्य तुष्टुवतुः कृतांजली ॥ ५१ ॥

त्वष्ट्र त्रिशिर उवाच।

गणेशाय नमस्तुभ्यं नमः सर्वप्रियंकर।

ब्रह्मणे ब्रह्मनाथाय विघ्नेशाय नमो नमः॥ ५२॥

हेरम्बाय परेशाय मूषकध्वजिने नमः।

आत्मनेऽनात्मने तुभ्यं नामे लम्बोदराय वै॥ ५३॥

अनामय हृयाधार सर्वाधार सुमूर्तये।

वक्रतुण्डाय सर्वेषां नमः पूज्याय ते नमः॥ ५४॥

आदिमध्यान्तहीनाय तदाकारय ढुण्ढये।

ज्येष्ठराजाय सर्वेषां मात्रे पित्रे नमो नमः॥ ५६॥

सर्वादिशूर्पकर्णाय पूर्णाय धरणीधर।

शेषनाभिविभूषाय नमश्चिन्तामणे नमः॥ ५७॥

सिद्धिबुद्धि प्रदात्रे ते  स्वानंदे वासकारिणे।

भक्तेभ्यः शान्तिदात्रे वै शान्तिस्थाय नमो नमः॥ ५८॥

सिद्धिबुद्धिबरायैव नमो मूषकवाहन।

गजाननाय ज्येष्ठेभ्यः पदज्येष्ठ प्रदायिने॥ ५९॥

धन्यौ माता पिता नाथ कुलशीलादिकं च मे।

येन दृष्टो गणाधीशो वेदांतागोचरो विभुः॥ ६०॥

वेदा विदुर्नो न च योगिनोऽयं ब्रह्मादयो वेदविदः शिवादयः।

शान्त्या प्रलभ्यं गणनाथमेवं पश्याबहे चित्रमिदं न संशयः॥ ६१॥

परात्परस्त्वं परम प्रमेयः कथं महात्मन्सदने गतो मम ।

न मत्समो ह्यंडकटाहमध्ये गणेश ते पादसमीपगादहो ॥ ६२ ॥

एवं संस्तुवतस्तस्य सस्त्रीकस्य महामुने ।

अत्यन्त भक्तिमाहात्म्यात् कण्ठरोधः समाभवत् ॥ ६३ ॥

ननर्त परमानंदयुक्तस्तत्र प्रजापते ।

सरोमांचो न सस्मार यथा भ्रान्तश्च साश्रुकः ॥ ६४ ॥

ततस्तं गणनाथो वै जगाद वचनं हितं ।

स्वयं साश्रुः सरोमांचो भक्तिं दृष्ट्वा महामुने ॥ ६५ ॥

**श्री गणेश उवाच ।**

भवत्कृतमिदं स्तोत्रं मम प्रीतिकरं बहु ।

भविष्यति जनानां वै मुने मद्भक्तिवर्धनं ॥ ६६ ॥

यः पठिष्यति यो मर्त्यः श्रोष्यते सर्वमालभेत् ।

भुक्तिं मुक्तिं ब्रह्मभूयं सर्वदा मत्प्रियो भवेत् ॥ ६७ ॥

वरान् वृणु महायोगिः त्रिशिरो मनसीप्सितान् ।

सर्वं दास्यामि भक्त्या ते तोषितोऽहं न संशयः ॥ ६८ ॥

**त्रिशिरा उवाच ।**

मां मोहयसि किं नाथ न वृणोमि गजानन ।

सर्वं भ्रान्तिप्रदं मत्वा क्तिं यावे त्वयि स्थिरां ॥ ६९ ॥

श्रुत्वा जगाद तं विघ्नराजोऽसौ विस्मितोऽभवत् ।

अहो  यः सुदृढां भक्तिमेकां वृणोति वाडवः ॥ ७० ॥

**श्री गणेश उवाच ।**

पूर्णां भक्तिं महायोगिन् लभते नात्र संशयः ।

मदीयां ते वशे नित्यं भविष्यामि तयाकिल ॥ ७१ ॥

एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः ।

सस्त्रीकः त्रिशिरास्तत्र खेदयुक्तो बभूव ह ॥ ७२ ॥

गणेशकृपया तत्र गृहं तसय महामुनेः ।

शुशुभे रत्नसंयुक्तं सुवर्णभित्तिसंयुक्तं

दृष्ट्वाऽसौ विसमितोऽभवत् ।

तावद्दासाश्च तं गृह्य सेवां चक्रुः सुभाविकाः ॥ ७३ ॥

तद् दृष्ट्वा परमाश्चर्यं मुनिः पत्नीं समब्रवीत् ।

माया भक्ति प्रणाशार्थं दत्ता विघ्नेश्वरेण च ॥ ७४ ॥

अतो यत्नसमायुक्ता भुक्ष्वं भोगान् महासति ।

एवं मदविहीनौ तौ परं बुभुजतुः सुखम् ॥ ७५ ॥

दानमार्गेण स ददौ द्रव्यं नानाविधं विधे ।

तथापि तादृशं तत्र रेजे सोऽपि सुविस्मितः ॥ ७६ ॥

एतत्ते कथितं किंचित् दूर्वामाहात्म्यमुत्कटम् ।

गणेशतोषकं पूर्णं सर्वसिद्धि प्रदायकम् ॥ ७७ ॥

गणेशरोमकूपेषु ब्रह्माण्डानि हयनेकशः ।

ब्रह्मनानाविधं देहे स्थितं तस्य प्रजापते ॥ ७८ ॥

तत्सर्वं तृप्तिमायाति तृप्ते विघ्नेश्वरे परे ।

फलं तसय च लोके को वर्णयेद् वहमानद ॥ ७९ ॥

इति विनायक संहिता समाप्ता ॥

ॐ सर्वं विश्वकर्मऽऽर्पणमस्तु ॥

शुभम्

